ह्रीः

# दुर्लभ बौद्ध ग्रन्थ शोध पत्रिका

## A Review of rare buddhist texts

5

दुर्लभ बौद्ध ग्रन्थ शोध योजना
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, वाराणसी
1988

# धीः

# दुर्लभ बौद्ध ग्रन्थ शोध पत्रिका

## 5

सम्पादक

प्रो० एस० रिनपोछे
योजना निदेशक

प्रो० व्रजवल्लभ द्विवेदी
उपनिदेशक



भोटविद्या संस्थानम्

**दुर्लभ बौद्ध ग्रन्थ शोध योजना**
**केन्द्रीय उच्च तिब्बती शिक्षा संस्थान**
**सारनाथ, वाराणसी**

बुद्धाब्द २५३२ बुद्ध पूर्णिमा ख्रीस्ताब्द १९८८

# Dhīḥ

## A Review of rare buddhist texts

## 5

*Editors*

PROF. SAMDONG RINPOCHE
**Project Director**

PROF. VRAJVALLABH DWIVEDĪ
**Deputy Director**



भोट विद्या संस्थानम्

**RARE BUDDHIST TEXT PROJECT**
**Central Institute of Higher Tibetan Studies**
**SARNATH, VARANASI**

**B. E. 2532** **BUDDHA PŪRṆIMĀ** **C. E. 1988**

धीः

## विषयानुक्रमणी

साकाराऽपि निराकृतिर्भगवती प्रज्ञा तयाऽऽलिङ्गितः
उत्पादव्ययवर्जितोऽक्षरसुखो हास्यादिसौख्योज्झितः ।
बुद्धानां जनकस्त्रिकायसहितस्त्रैकाल्यसंवेदकः
सर्वज्ञः परमादिबुद्धभगवान् वन्दे तमेवाऽद्वयम् ।।

महापण्डितरत्नाकरगुप्तस्य

# प्रज्ञापारमितास्तुतिः

[ यह स्तुति अप्रकाशित बौद्ध स्तोत्रसंग्रह ( पत्र 26 a, क्रमाङ्क 43 ) से ली गई है। इस संग्रह का विवरण 'धीः' के प्रथम अंक में पृष्ठ 42 पर द्रष्टव्य है। ]

**ॐ नमः श्रीप्रज्ञापारमितायै**

**निर्विकल्पे निरालम्बे निरवद्ये निरञ्जने।**
**नित्यानित्ये निर्विकारे प्रज्ञे देवि नमोऽस्तु ते ॥ 1 ॥**

**बुद्धानां जननीशानि बोधिसत्त्वपितामहि।**
**प्रपितामहि सत्त्वानां प्रज्ञे देवि नमोऽस्तु ते ॥ 2 ॥**

**मातर्मातर्जगन्मातरिति संजपतां नृणाम्।**
**मनोरथप्रदे शुद्धे प्रज्ञे देवि नमोऽस्तु ते ॥ 3 ॥**

**लक्ष्मीस्त्वमसि कल्याणी श्रीर्धीः श्रद्धा धृतिः स्मृतिः।**
**सर्वस्वरूपे सर्वेशे प्रज्ञे देवि नमोऽस्तु ते ॥ 4 ॥**

**लोकोत्तरे लौकिके च प्रज्ञापारमितेऽमिते।**
**दशपारमिताकार(रे) प्रज्ञे देवि नमोऽस्तु ते ॥ 5 ॥**

**इति प्रज्ञापारमितास्तुतिः समाप्ता ॥**

# गण्डीस्तवः

[ सुप्रसिद्ध आचार्य आर्यदेव कृत यह गण्डीस्तव के० उ० ति० शि० संस्थान के शान्तरक्षित ग्रन्थालयस्थ धारिण्यादिसंग्रह से लिया गया है। इस संग्रह का विवरण 'धीः' के अङ्क 2, पृष्ठ 6 पर तथा इस स्तव का विवरण भी पृष्ठ 35 पर दिया जा चुका है। ]

आपातालान्तदेवाः सुरनरगरुडा दैत्यगन्धर्वयक्षाः
सिद्धा विद्याधराद्या जलधितटगता नागसत्त्वाः समग्राः।
गण्डीशब्दं समन्ताद् रभसितमनसः स्वासनेऽस्मिन् प्रसन्नाः
श्रोतुं [साधो]रधीरा विमलगुणगणस्यास्य त्रैलोक्यबन्धोः ॥ 1 ॥

लीलावासितचामरैश्चलदहो काञ्चीप्रपञ्चालसत्
प्राञ्चत्काञ्चनकिङ्किणीभिररणत् स्वासीनहंसस्वनाः।
तारुण्यामलनीलनीरजदलश्यामाङ्गमाराङ्गना-
श्चक्रुर्यस्य न मानसस्य विकृतिं बुद्धाय तस्मै नमः ॥ 2 ॥

येषामस्ति प्रसादो भगवति सुगते मारभिद्योगयुक्ते
ये वा सद्यः प्रसन्नाः सुगतसुतकृते स्वस्ति येषां च भक्तिः।
गण्डीमाहत्य चास्मिन् जगति शुभकरां शाक्यसिंहस्य शास्तुः
कृत्वा शुद्धान्तसंस्थां सुविहितमनसः श्रोतुमायान्ति सर्वे ॥ 3 ॥

बुद्धं त्रैलोक्यनाथं सुरनरनमितं पारसंसारतीरं
धीरं गम्भीरवन्तं सकलगुणनिधिं धर्मराज्याभिषिक्तम्।
तृष्णामारान्तकारं कलिकलुषहरं कामलोभान्तवन्तं
तं वन्दे शाक्यसिंहं प्रणमितशिरसा सर्वकालं नमामि ॥ 4 ॥

ऋम्पं ऋम्पं ऋऋम्पं टम टम टटमं तुन्दतुन्दं तुतुन्दं
सं सं सं सं स सं सं समसममसमं दुमं दुमं द्रदुमंम्।
नागिर्नागिर्ननागिस्तखितखितखितस्तत्यजुर्ये रणे वै
कैः कैः कैः कैश्च कैः कैर्जगति भयहरा कीर्त्यते धर्मगण्डी ॥ 5 ॥

कुरुत कुरुत श्रोपं ध्यानसन्नाहमग्रं
ग्रसति न खलु यावद् दुर्निवारः कृतान्तः।
इति वदति जनौघे बोधिता भिक्षुसङ्घाः
क्षपितदुरितपक्षाकीर्णनिःशेषदोषाः ॥ 6 ॥

यस्मिन्नभ्युदितेऽखिलं त्रिभुवनं यात्यस्तमस्तङ्गते
येन ज्ञानगभस्तिहस्तविसरैर्हस्तं यतस्तन्यते ।
सद्धर्मामलमण्डलो दशबलः संसाररात्र्यन्तकः
पायाद्वो मुनिभास्करः सुरगणान् बुद्धः प्रजाबान्धवः ॥ 7 ॥

चित्तं येन जितं गजेन्द्रचपलं ज्ञानाक्षरैर्नाङ्कुशै-
र्नष्टं रागतमोऽन्धकारपटलं ज्ञानाग्निना तायिना ।
ध्वस्तं मारबलं प्रशान्तमतिना क्षान्त्यायुधैर्नायुधै-
स्तं वन्दे प्रणतार्तिनाशनपटुं बुद्धं प्रबुद्धं मुनिम् ॥ 8 ॥

तीर्थ्यानामाशु सैन्यं झटिति विघटयन् नाकनिष्ठप्रतिष्ठं
भूयिष्ठाभिः प्रभाभिर्भुवनमवतरंस्त्रासयन् भासुराभिः ।
लक्ष्मीः पातालमूले स्थितकनकमहागर्भसिंहासनस्था
गीतज्योतिः स्वयं को(वो) दिशतु दशबलो दर्शितप्रातिहार्यः ॥ 9 ॥

पादाङ्गुष्ठे निविष्टां क्षिपति पृथुशिलाच्चैः स राजातिगुर्वी
चोग्रं ग्रीष्मप्रतापप्रशममुपगतो वल्गुना मन्त्रपूताम् ।
तामेव त्रास्यमानो विघटयति सुखं श्वासनिःश्वासवातान्
लोकं सिद्धाः प्रणेमुः स दिशतु भगवान् सम्पदं सर्वदर्शी ॥ 10 ॥

भग्ना मारादिरूपाः प्रलयभयकरा बद्धसन्नद्धकक्षा
नाना तीक्ष्णाग्रहस्ताः करितुरगमुखाः सिंहनादं नदन्तः ।
बुद्धत्वं येन नीताः कुवलयदलदृशा [प्रेक्षिता] भिक्षुसङ्घाः
धर्मं कान्तं [नितान्त]मघदलनपटुं तीर्थिकाणां शृणुध्वम् ॥ 11 ॥

चित्तं यस्याङ्गनायां रतितरलदृशाऽपाङ्गभङ्गैः सुभङ्गैः
क्षोभं नैवाशु नीतं कुचकलशभरैर्हारलीढैः सुलीढैः ।
तस्यैषा धर्मगण्डी मधुरकलरवं रावते भिक्षुसङ्घं
धर्मं कान्तं तदीयं परमभयकरं तीर्थिकाणां शृणुध्वम् ॥ 12 ॥

यः श्रीमान् धर्मचक्रे प्रमुदितमनसा धर्मरत्नैकमौलि-
र्भूयांसं पूर्णदेहं विकसितवदनं धर्मरत्नोद्गिरन्तम् ।
सिंहाक्रान्तासनस्थः कनकगिरिनिभो धर्मनादं नदन्तं
तस्यैषा धर्मगण्डी प्रणदति सततं संशृणुध्वं जिनस्य ॥ 13 ॥

मा मा मा मीयकण्ठैर्डिमडिमगगता गागगागैर्गलन्तैः
ना ना ना नोपनीतं ननु ननु ननु मा घुर्यमाघुर्यकान्तैः।
गीतैः कामाङ्गनानां प्रचलितमभवद् यस्य चेतो न शर्मि
तस्यैषा धर्मकेतोः पटुपटहरवा रारटीत्युग्रगण्डी ॥ 14 ॥

किं संवर्तप्रदत्तप्रसववनचरा दीर्घसंरम्भनादाः
किं वा निर्वाटघातः किमुत भगवती हुंकृतिर्वज्रपाणेः।
तत्सर्वं वै जनानां प्रवचनमतयो द्रष्टुमन्तः प्रवृत्ता
बुद्धस्योदारमूर्तेस्त्रिदशभयकरो गण्डिवादः स एषः ॥ 15 ॥

ऊर्जासंघातिमारा विकृतनखमुखा रौद्रसिंह[स्व]रूपाः
पाताले रत्नदीपे प्रकटमणिगणाः शब्दिताः पर्वतेन्द्राः।
देवेन्द्रैर्मौलिरत्नैः प्रणमितचरणं यस्य विश्वैकबन्धो-
राकेषां(?) हन्यमाना यतिषु शुभविदः शाक्यसिंहस्य गण्डी ॥ 16 ॥

कीतिर्नाथ प्रमथकमनङ्गोऽस्तु वा तत्त्वदीया
दीनानाथोद्धरण पुरतो गीयते मारशत्रोः।
खिन्दं खिन्दं खिखिन्दं खुद खुद सुखदं दत्तके दत्तुन्दं
तुन्दं तुन्दं तुतुन्दं ध्वनिपटुपटहैः सिद्धगन्धर्वनागैः ॥ 17 ॥

मारैर्नानाप्रकारैर्विकृतशतमुखैर्भूरिवक्त्रैर्ज्वलद्भि-
र्भीमैरट्टाट्टहासैः पललकवलितैः सिंहनादं नदद्भिः।
कालाकारैरनेकैर्गहनभयकरैः सर्वतो भीषयद्भि-
र्व्याप्तं चेतो न यस्य क्षणमपि नियतं मारभङ्गः स वोऽव्यात् ॥ 18 ॥

राजा निष्कण्टराज्यो भवतु वसुमती सर्वसस्याभिपूर्णा
काले वर्षन्तु मेघा व्यपगतविपदः सन्तु लोकाः समस्ताः।
वीहारे कर्म पूर्णं यदखिलनृणां सर्वविघ्नोपशान्तिः
अन्योन्यप्रीतिभावाद् भवतु सुखमयो वीतरागार्यसङ्घः ॥ 19 ॥

शास्तुः सद्धर्मरत्नं सुगतवरसुतान् प्रेरयन्ती विशुद्धचेद्
रागद्वेषैर्विमूढान् विषमपथगतान् रावयन्ती जयन्ती।
सत्त्वानुत्तारयन्ती प्रशमशरशतैर्विद्यमानार्थवन्तं
शास्तुः संप्रीतिहार्यं विविधवररुतैः शान्तिकारी जनस्य ॥ 20 ॥

स्फेटन्तं वारनार्या विकटगणघटाट्टाट्टहासं नदन्तं
खेलन्तं विस्फुरन्तं ज्वलदनलशिखाकान्तलीलां ददन्तम् ।
भन्तां प्रेमप्रकामं स्फुटदुरुवचसं कामधात्वीश्वरत्वं
तं वन्दे वन्दनीयं सकलभयहरं बुद्धवीरं सुवीरम् ॥ 21 ॥

संपन्नेऽङ्गुष्ठपद्मे झटिति..............कण्ठमेवोपकण्ठे
ढक्कासंकाशतालैः कलपटुपटहैः शङ्खनिर्घोषिघोषैः ।
हा हा हुं हूं कृता ये झटितिकटकटैर्भीमनादानुमोदैः
क्षुद्रं चेतो न चैतत् सुरवरजयिनो यस्य तस्मै नमोऽस्तु ॥ 22 ॥

गर्जन्तं वाग्विशेषं प्रकटपटुरवैर्दिव्यगान्धर्वशब्दै-
र्नानानागेन्द्रयक्षैः स्तुतिचटुलशतैः पूज्यमाना महद्भिः ।
सांख्ये माहेश्वरीयानसुरगुरुतम.......................................
..................मारभन्ती करकमलगता शान्तिमारारटीति ॥ 23 ॥

दत्वा सर्वस्वदानो क्रतुकनकमयं वारणानां शतं वा
राज्यं पुत्रं कलत्रं स्वतनुमपि शिरश्चक्षुषां वा सहस्रम् ।
येना.......भिरपि शतैर्वत्सराणां व्ययत्वात्
सम्यक्संबोधिरग्रा स जयति सुगतः शान्तये सज्जनानाम् ॥ 24 ॥

नानारूपविरूपदृश्यविकृतेर्भूयो प्रसेद्द भूतिभि-
र्बोधैर्योषिति रोधनप्रजनितज्योतिर्ज्वल[द्वन्ध]नैः ।
मारस्यानुचरैर्न यस्य सुधियः किञ्चिन्मनः कम्पितं
नृत्यैर्वा सुगतस्य मारजयिनो गण्डो रणत्यद्भुतम् ॥ 25 ॥

यस्य नादं निशम्या श्रवणसुखकरं यान्ति तृप्ति समन्तात्
प्रेता भूमीमुखाद्याः पृथुतरवपुषः क्षुत्पिपासालि(भि)भूताः ।
सम्यग्भक्त्या प्रसन्नैः सुरनरवपुषैः श्रूयते चातुरैर्या
सा गण्डी पातु विश्वं दशबलबलिनस्तस्य माना मनोज्ञा ॥ 26 ॥

नानावाद्यकरीन्द्रवाजिमहिषव्याघ्रादिशब्दैर्युतं
चञ्चत्कुन्तसुबाणतोमरगदाचक्रादिशस्त्रोद्यतम् ।
भग्नं सैन्यमनेकयोधसहितं मारस्य येन क्षणात्
तस्येयं करुणानिधेर्भगवतः पायाज्जगद् गण्डिका ॥ 27 ॥

धर्मे संरम्भचित्ताः प्रभवहतविधिः पापतः सर्वदैव
दाने शीले क्षमायां पठति सकरुणे सज्जनाः संयताः स्युः ।
इत्येवं सर्वसत्त्वान् सुमधुररणितैर्बोधयन्ती विशुद्धा
तन्नः पुण्यैर्वचोभिस्त्रिजगति सकलं बुद्धवीरस्य गण्डी ॥ 28 ॥
शृण्वन्ती सावधाना प्रशमततशराभ्यासनैर्नैव शब्दं
सेन्द्रादानन्दवज्री स्वभुवननृपतेस्तुङ्गवेलेव देवान् ।
वन्दीभूतान् मुनीन्द्रान् प्रवचनपटुताकारसंरम्भशब्दै-
र्या गण्डी दण्डघातक्रममनुरणनाद् दुन्दुभीवद् धुनोति ॥ 29 ॥
हुंकारी पद्मयोनिस्त्रिपुरविजयिनो वल्लभः शूलपाणिः
विष्णुर्यद् वज्रपाणिः सुरपतिरसुरध्वंसनश्चक्रपाणिः ।
ये वा चान्ये स्तुवन्ति प्रमतनिजरवे क्षोभभावे किमास्ते
सर्वे तस्याङ्घ्रिमूले विनयमुपगता गेयमन्त्रं स्तुवामि ॥ 30 ॥
अज्ञान् सर्वज्ञनाथान् मुनिपदसहितान् भ्रामयन्ती त्रिलोकं
मारांश्चान्यप्रकारैर्विविधभयकरान् त्रासयन्ती समस्तान् ।
पापान् प्रोत्सारयन्तो विषयरतिधियः पण्डितान् बोधयन्ती
प्रोच्चैः संरुद्धबोध्यान् प्रवदति भुवने शाक्यसिंहस्य गण्डी ॥ 31 ॥
व्याघ्रयै दत्त्वा स्वदेहं गुणशतनिवहं पुण्यसम्भारलब्धं
बुद्धत्वं यः प्रयातः प्रतिहतदुरितो मन्मथोन्मादनार्थी ।
शास्ता यश्चाद्वितीयो भवभयभिदुरो भिन्नपापाभिसन्धि-
स्तस्येयं वै विचित्रा स्तनति भगवतः शाक्यसिंहस्य गण्डी ॥ 32 ॥
मायादेव्याश्च कुक्षौ जनितजिनवरः शाक्यसिंहो मुनीन्द्रो
भूम्नि प्रायात्तु मध्ये प्रवरसुमुनिना लोकवृक्षस्य मूले ।
देवेन्द्रब्रह्मरुद्रासुरनरविबुधैः स्नापितो यः स देवः
तं वन्दे भक्तिरत्नैः शशधरकिरणाक्षोदिदेहं मुनीन्द्रम् ॥ 33 ॥
मारैर्नानाप्रकारैरसिपरशुधनुर्बाणहस्तैर्ज्वलद्भि-
र्भीमास्यैर्दुष्टदंष्ट्रैर्गजभुजगमुखैः सिंहवक्त्रैः श्ववक्त्रैः ।
प्रत्यञ्चेनोनमस्य क्षणमपि शमितस्तस्य बुद्धस्य पादौ
गन्तुं लोकोऽपि सर्वा ध्रुवमिति गतभीश्चैषु गण्डी निनाद्या ॥ 34 ॥

इति गण्डीस्तवः समाप्तः ॥

कृतिरियम् आचार्य-आर्यदेवपादानाम् ।

—: ० :—

# दुर्लभ ग्रन्थ परिचय

—जनार्दन पाण्डेय—

[ 'धीः' के 1 से 4 अंक तक 'दुर्लभ ग्रन्थ परिचय' शीर्षक से 3 बृहत्संग्रहों, 3 चर्यासंग्रहों और 13 प्रकीर्ण ग्रन्थों ( कुल 19 ग्रन्थों ) का परिचय दिया जा चुका है। प्रस्तुत अंक में निम्नलिखित 16 ग्रन्थों का विवरण दिया जा रहा है—

20. श्रीयोगाम्बरविधिः
21. कृष्णयमारितन्त्रम्
22. चक्रसंवरकल्पमहातन्त्रराजः
23. कालचक्रावतारः—अभयाकरगुप्तपादस्य
24. चक्रसंवरमहातन्त्रराजध्यानयोगः
25. डाकिनीवज्रपञ्जरटिप्पणी
26. हेरुकाभ्युदयपञ्जिका—कुमारचन्द्रस्य
27. शिष्यानुग्रहविधिः
28. वज्रयोगिन्याः शिष्यानुग्रहविधिः—महापण्डितजयेन्द्रसेनस्य
29. हेवज्रप्रकाशः—महामूलाचार्यराहुलगुप्तस्य
30. दशतत्त्वसंग्रहः—पण्डितक्षितिगर्भस्य
31. ज्ञानावेशविधिः—शून्यसमाधिपादस्य
32. प्रज्ञाकर्मसमुच्चयः—शून्यसमाधिपादस्य
33. महाकालसाधनम्
34. वसन्ततिलकतन्त्रम् (1)—आचार्यश्रीघनस्य
35. वसन्ततिलकतन्त्रम् (2)—दशबलाचार्यस्य ]

**20. श्रीयोगाम्बरविधिः**

**ग्रन्थ**—श्रीयोगाम्बरविधि

**ल० सं०**—994.

**पत्र सं०**—1-62, **पंक्ति प्र० प०**-5, **अक्षर प्र० पं०**-34

**आधार**—नेपाली कागज, **आकार**—$22\frac{1}{2} \times 7\frac{1}{2}$ से० मी०

**लिपि**—नेवारी, पूर्ण।

**प्रारम्भ**

ॐ नमः श्रीसिद्धयोगाम्बराय

नत्वा योगाम्बरं नाथं योगिनीगन(ण)नायकम् ।
तत्साधनमहं वक्ष्ये मृदुमध्यादिभेदनम् ॥
सवो(र्वा)नुकूलभेदेन निगद्य सुखसाधनम् ।
कुर्याद् करादिसंशुद्धिर्मन्त्री योगपरायणः ॥
चन्द्रमण्डलमध्यस्थं हृदि हूंकारसंभवम् ।
पञ्चसूचिकरवज्रं भावयेत् सुसमाहितः ॥

**अन्त**

इति सूच्चार्य लोकोत्तरानपि(न् वि)सर्जयेत् [त]तः श्रीलौकिकान्, ॐ सर्वदुष्टान् गृह्ण 2 गच्छ पुनरागमनाय हूं फट् स्वाहा । इत्युच्चार्य छोटिकात्रयं दत्त्वा विसर्जयेत् ।

**पुष्पिका**

इति श्रीचतुष्पीथि(ठ)बृहन्महातन्त्रराजोद्धृत-आत्मपीठि(ठे) श्रीयोगाम्बरविधिः प्रथमः समाप्तः ।
ये धर्मेत्यादि, शुभ संवत् 994 आषाढमासे कृष्णपक्षे प्रतिपदायाम् ।

**विवरण**

यह ग्रन्थ आशासफू काजी आर्काइब्ज काठमांडू से जोराक्स होकर आया है और उन्हें श्री धर्मरत्न वज्राचार्य के संग्रह से प्राप्त हुआ है । इसकी एक प्रतिलिपि श्री जगन्नाथ उपाध्याय के संग्रह में भी है ।

**विषयनिर्देश**

इसे मूलतः तीन प्रकरणों में विभक्त किया है—आदियोग समाधि, मण्डलराजाग्री समाधि और कर्मराजाग्री समाधि । प्रथमप्रकरण में चित्तशोधन, शंखाधिष्ठान, जिह्वाशोधन के बाद वलिदानपर्यन्त पूजा की विधि है । दूसरे मंडलराजाग्री समाधि प्रकरण में मण्डलसूत्रपातन, मण्डलों में वीर-वीरेश्वरी, अष्टभैरव, श्मशानदेवता, लोकपाल, योगिनी, विनायकादि की स्थापनविधि, उनका स्वरूप, ज्ञानमण्डल भावनाविधि, भूमलादि डाकिनी और कल्पादि की स्थापना, उनका स्वरूप, एवं सभी की समयमुद्राओं के लक्षण दिये हैं । तीसरे कर्मराजाग्री समाधि प्रकरण में कर्मानुसार जपादि का विधान, वलिकर्म की विधि और विसर्जन का प्रकार बताया गया है ।

इस ग्रन्थ में प्रायः 60 देवताओं की समयमुद्राएँ और अन्य पूजोपयोगी मुद्राओं के लक्षण आये हैं । इनमें से अधिकतर मुद्राओं के लक्षण 'धीः' अंक1 में 'बौद्धतन्त्रों की कुछ मुद्राएँ'शीर्षक के अन्तर्गत दे दिये गये हैं । इसके पत्र 5 में एकमात्र अपभ्रंश गाथा मिलती है—

सोहिअ वज्ज उलाल तालिअ संवर्त विमोच्छ ।
धम्मो विज्ज वज्ज होच्छ ॥

## 21. कृष्णयमारितन्त्रम्

**ग्रन्थ**—कृष्णयमारि तन्त्र

**ल० सं०**—2590

**पत्र सं०**—1-10, **पंक्ति प्र० प०**-5, **अक्षर प्र० पं०**-34

**आधार**—नेपाली कागज, **आकार**—25 × 8.5 से० मी०

**लिपि**—नेवारी, **पूर्ण** ।

**प्रारम्भ**

ॐ नमः श्रीमहायोगेश्वराय, ॐ नमः श्रीकोलाश्याय । ॐ नमः श्री जयतन्त्रतीदेव्यै ।

श्रीमदस[द्]द्विषमसे(शे)षगुणप्रसूतिं संवर्तकालनव[नीरद]नीलकान्तिम् ।
वक्त्रत्रयान् कुलिशखड्गधरं सकर्तिचक्राब्जकर्प(र्प)करहृन्मनसा नमामि ॥

एवं मयेत्यादि । ततस्थ(श्च) हृदयस्थहूंकाररश्मिना यमारिचक्रमाकृष्य मुखेन प्रवेश्य रागानुरागेण द्रवीकृष्य(त्य) वज्रमार्गेण देवीकमलं सूर्यंतद्बोधिचित्तनिष्पन्ने माण्डलेयबीजाक्षराणि यथा स्थापयेत् ।

**अन्त**

सर्वबुद्धस्वभावस्त्वं सर्वबुद्धैकसंग्रहः ।
सर्वबुद्धवराग्रा(ग्र्या)ग्र मण्डलेश नमोऽस्तु ते ॥

**पुष्पिका**

इति श्रीकृष्णयमारितन्त्रे महायोगसंगपटलः समाप्तः ।

ये धर्मेत्यादि । शुभसंवत् 998 स्तिपोय ह्यागा हूं दुरुषिध एका दिन जुल शुभम् ।

**विवरण**

यह ग्रन्थ आशासफू काजी आर्काइब्ज काठमांडू से जीराक्स करके मंगाया गया है । 18 पटल वाले प्रसिद्ध कृष्णयमारि तन्त्र से, जिसका कि शीघ्र ही दुर्लभ बौद्ध ग्रन्थ शोध योजना से प्रकाशन होने जा रहा है, यह भिन्न है । ऐसा प्रतीत होता है कि मूल ग्रन्थ की विधि को संक्षेप करके इस रूप में लिखा गया है । इसका तिब्बती अनुवाद उपलब्ध नहीं है, जबकि कृष्णयमारि से सम्बद्ध प्रायः 22 ग्रन्थों का तिब्बती अनुवाद तंजुर में प्राप्त है ।

**विषयनिर्देश**

इसमें 9 पटल हैं और प्रत्येक पटल का विषय उसकी अवान्तर पुष्पिका में दिया गया है, जो इस प्रकार हैं—

1. इति श्रीकृष्णयमारितन्त्रे मण्डलचक्रविधिः ।
2. ,, ,, ,, तिगीती (?) समनन्तरमेव अभ्यन्तरविधिः ।

2

3. इति श्रीकृष्णयमारितन्त्रे अनुयोगविधिः ।
4. ,, ,, ,, ऊर्द्ध(र्ध्व)पटलविधिः ।
5. ,, ,, ,, मण्डलस्वरप्रवेशविधिः ।
6. ,, ,, ,, बाह्यचक्रविधिः ।
7. ,, ,, ,, आभ्यन्तरबाह्याभिषेकविधिः ।
8. ,, ,, ,, गुह्यचक्रविधिः ।
9. ,, ,, ,, महायोगसंगपटलः ।

इसमें किसी ग्रन्थान्तर या आचार्य का उल्लेख नहीं है । 2 स्थानों पर गाथापद आये हैं—

पत्र 2. तत्र वज्रचर्चिका एवं संचोदयति—

उठ भरो तो करुणा कोह् । तिहु अण सअल तफेहि मोह् ॥

तथा वज्रवाराही –

ए चउमार पराजिअ राउल । उठि भराउ चित्त आउल ॥

तथा वज्रासने चेति—

तो अति मन्त्रि अच्छासि गुना । उठ भरा डोला अह् पुण्णा ॥

तथा वज्रगौरी—

काइदु आच्छमि गुनो होविंत्ति । वोहि महाभरो अनिमंति ॥

पत्र 9. वज्रचर्चिकामुखेन—

अडों डों डों किट्टयमारि गुरु अमहाव ।
हडडुह् पेक्ख विभामि गुरुच्छ ब्रूहि कोह् महाव ॥

ततो वज्रवाराहीमुखेन

पइनच्चन्न कप्पि ठोइ सग्ग मच्चया आलु ।
किट्टह्ण्णिाउध कोह् मणच्च हन्त वे आलु ॥

ततो वज्रसरस्वतीमुखेन

काला खब्ब पवान तावहु विहणिम्मसि रूह् ।
वज्ज सरम्भइ विण्णमसि पच्चइ तुहू महामूह ॥

ततो वज्रगौरीमुखेन

ह्रीः ष्ट्रोः मंत णच्चतु हूं हे उहिति हूं अणभान्ति ।
कलु कोह् भराउ तुहू जग पेक्ख उच्चंति ॥

## 22. चक्रसंवरकल्पमहातन्त्रराजः

**ग्रन्थ**—चक्रसंवरकल्प

**संख्या**—इ 11649

**पत्र** सं०—1-5, **पंक्ति प्र० प०**—5, **अक्षर प्र० पं०**—30

**आधार**—नेपाली कागज, **आकार**—18.7 × 6.7 से० मी०

**लिपि**—देवनागरी, **पूर्ण** ।

**प्रारम्भ**

ॐ नमः श्रीचक्रसंवराय

अथातः संप्रवक्ष्यामि एकवीरविधानकम् ।
नाभौ विचिन्तयेन्मन्त्री अनिलानलमध्यतः ॥

तस्योपरि विश्वपद्ममध्ये सूर्यमण्डलोपरि पञ्चज्ञानामृतपरिपूर्णकपालं तन्मध्ये आलिकालिद्विगुणीकृत्य अनुलोमविमलो हुंकाराधिष्ठितवाग्वज्रसत्त्वयोगेन सुरतसुखभूतः श्रीहेरुकमात्मानं भावयेत् ।

**अन्त**

महामन्त्रार्थसूत्रेण जपेन्मन्त्रं विधानतः ।
चतुःसन्ध्याप्रयोगेण जापभावनतत्परः ॥
सिद्ध्यते तु महाविद्या मन्त्रशोधनमुत्तमम् ।
प्रविश्य मण्डले मन्त्री कायवाक्चित्तभावनैः ॥
मण्डलदेवतायोगैः सर्वसिद्धिप्रदायकम् ॥

**पुष्पिका**

इति श्रीकल्पराजतन्त्रः श्रीचक्रसंवरो नाम समाप्तः ।

**विवरण**

इस ग्रन्थ को माइक्रोफिल्म राष्ट्रीय अभि० काठमांडू से उपलब्ध हुई है ।

**विषयनिर्देश**

यह तन्त्र-ग्रन्थों के चार विभागों में योग के अन्दर आता है । प्रारम्भ में श्रीहेरुक और वज्रवाराही की भावना के लिये उनके स्वरूप का वर्णन है । तब कायवाक्चित्तस्थित दस भूमियों, पीठ, उपपीठ आदि के विन्यास का विवरण है ।

## 23. कालचक्रावतार:

**ग्रन्थ**—कालचक्रावतार
**ग्रन्थकार**—अभयाकरगुप्तपाद
**संख्या**—5065 ( फोटो कापी )
**पत्र सं०**—1-8, **पंक्ति प्र० प०**—7, **अक्षर प्र० पं०**—89
**आधार**—ताड़पत्र, **आकार**—15.3 × 2.5 से० मी०
**लिपि**—नेवारी ( प्राचीन ) , **पूर्ण** ।

**प्रारम्भ**

प्रज्ञोदयाद्वैतमसीमशर्म्मं विश्वां तति नेत्रुदकेऽन्यज्ञेयम् ।
विज्ञेयज्ञेयादिमयं शरीरं ॐ वं बीजमाबीजं तं नमामि ॥
यान्यम्बरस्य श्रिययोदयन्ति सम्पद्विपद्भीरभिवेदयन्ति ।
ताथागतान्यन्तरितं चरन्ति……तान्यद्य तमो जयन्ति ॥

**अन्त**

उदितमिदमुदारं लेभिरे तत्र पारं
प्रथितमिह नितान्तं कालचक्रेऽवतीर्य ।
गमयतु यदबन्धं निर्विबन्धं सुबुद्धि-
र्मुखमिति रचितेऽस्मिन्……महात्मानः(?) ॥

**पुष्पिका**

इति कालचक्रावतारः ।
कृतिरियं पण्डिताभयाकरगुप्तपादानामिति ।

**विवरण**

इस ग्रन्थ की फोटो कापी के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय से उपलब्ध हुई है ।

**विषयनिर्देश**

तन्त्रसाधना का ज्योतिषशास्त्र से घनिष्ठ संबन्ध है। किस मुहूर्त में की हुई कौन साधना सफल होती है, कौन नहीं ? इसके लिये साधक को ज्योतिष की शरण में जाना पड़ता है। सुप्रसिद्ध विद्वान् एवं साधक अभयाकरगुप्त पाद का यह ग्रन्थ ज्योतिष के प्रारम्भिक ज्ञान के लिये अत्यन्त उपयोगी है ।

इसमें तिथि, वार, नक्षत्र, योग, करण आदि का पूरा विवरण दिया है । आकाश में ग्रहों की गति, उनका अतिचार और वक्री होना, राशियों में उनका संक्रमण, प्रत्येक राशिनक्षत्रादि का काल-मान, उनके प्रतिदिन के भोग में वृद्धिक्षय की व्यवस्था, संवत्सरों की प्रक्रिया आदि का सम्यक् प्रतिपादन किया गया है । यह ग्रन्थ लघुकाय होने पर भी आकर ग्रन्थ है ।

ग्रन्थ की समाप्ति के बाद भी—

"चन्द्रः प्रतिमासं त्रयोदशराशींश्चरति, सूर्य एकराशिम्, राहोर्मण्डलदिनानि 3900, मङ्गलस्य····, बुधस्य 191, गुरोः 9333, शुक्रस्य 3791, शनैश्चरस्य 10139, सिद्धान्ते सूर्यमण्डलदिनानि 365, प्रत्यहं भोगदण्डपाद 36·········" तीन पंक्तियों में यह विवरण दिया है। यह इसी ग्रन्थ का अंश है या इसके आगे कोई अन्य ग्रन्थ लिखा गया था, यह कहा नहीं जा सकता, क्योंकि पंक्ति इसी में पूर्ण हुई है और आगे के पत्र नहीं हैं।

## 24. चक्रसंवरमहातन्त्रराजध्यानयोगः

**ग्रन्थ**—चक्रसंवरमहातन्त्रराजध्यानयोग

**सं०**—M. B. B. III-2

**पत्र सं०** – 8, **पंक्ति प० प्र०**—5, **अक्षर प्र० पं०**—24.

**आधार**—नेपाली कागज, **लिपि**—नेवारी

**पूर्ण।**

**प्रारम्भ**

ॐ नमः श्रीचक्रसंवराय

अथातः सम्प्रवक्ष्यामि एकवीरविधानतः।
नाभौ विचिन्तयेन्मन्त्रः(न्त्री) अनिलानलमध्यतः॥

तस्योपरि विश्वपद्मं मध्ये सूर्यमण्डलोपरि पञ्चज्ञानात्मकं परिपूर्णकपालं तन्मध्ये आलिकाली द्विगुणीकृत्वा भूरोमविमलो हूंकाराधिष्ठितवाग्वज्रसत्त्वयोगेन सुरतसुखोद्भूतः(तं) श्रीहेरुकमात्मानं भावयेत्।

**अन्त**

····डाकिनीजालसंवरः स्वाहा। ॐ ह्रीं ···हुं फट् स्वाहा, सर्वबुद्धडाकिनीये वज्रवैरोचनीये हुं फट् स्वाहा। ॐ रोमिनीये हुं फट् स्वाहा। ॐ रूपिणीये हुं फट्। ॐ खण्डरोहायै हुं फट्।····सर्वधर्मा-नुमोदन्ते····त्वात्। इदमवोचद् भगवान् अस्तमनास्तद्भगवतो भाषितमभ्यनन्दन्निति।

**पुष्पिका**

इति श्रीचक्रसंवरस्य महातन्त्रराजस्य ध्यानयोगः समाप्तः।

**विवरण**

इस ग्रन्थ की माइक्रोफिश प्लेट के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय से उपलब्ध हुई है।

**विषयनिर्देश**

इसमें प्रथम चित्त, वाक् और कायचक्रस्थ देवताओं की भावना के लिये उनके स्वरूप विस्तार से दर्शाये गये हैं। फिर इनके बीजाक्षरों सहित स्थानों का निर्देश किया गया है और अन्त में ध्यान-योग की विधि बताकर सबके मन्त्र दिये गये हैं। इसका प्रारम्भिक अंश पूर्वोक्त संख्या 22 में दिये हुए ग्रन्थ से मिलता है; किन्तु शेष अंश पृथक् है।

## 25. डाकिनीवज्रपञ्जरटिप्पणी

**ग्रन्थ—** डाकिनीवज्रपञ्जरटिप्पणी

**ल० सं०**—5-110

**पत्र सं०**—1-9, **पंक्ति प्र० प०**—22, **अक्षर प्र० प०**—71.

**आधार**—नेपाली कागज, **आकार**—$31\frac{1}{2} \times 12\frac{1}{2}$ से० मी०

**लिपि**—देवनागरी, **पूर्ण।**

**प्रारम्भ**

ॐ नमो वज्रडाकाय

प्रणम्य डाकिनीवज्रपञ्जरं यस्य लिख्यते।
विभागो गुरुतः सम्यक् स्मृतयेऽन्यस्य कस्यचित्॥

आकाशेष्वित्यादि। आकाशं धर्मोदयः। जड इति पृथ्वी। स्वच्छ इति वारुणम्। अनवकाश इति वायुः। प्रकाशिनीति वह्निः। विश्व इति धर्मोदयान्तर्गतविश्वपद्मम्। वज्रालय इति विश्वपद्मोपरि विश्ववज्रम्। नयन इति चतुर्मण्डलोपरि दृष्टभ्रूचक्रसम्भववैरोचनसमापत्तिजनितामृतधाराद्रुत-चतुर्महाभूतपरिणामितकूटागारम्। सत्त्वधाताविति। तदेव डाकडाकिनीनामाधारत्वात् सत्त्वधातुः।

**अन्त**

प्रसूतकालवत् स्वयमिति। प्रसवपीडितानां दुःखशान्तये स्वयं प्रसवकाले स्थितमिवेत्यर्थः। पद्माकाङ्क्षमिति प्राकृतपद्मस्पृहाम्, निवेश्य वज्रिणं प्रवेश्य कुलिशम्। सम्बुद्धसेवयेति। सम्बुद्धैः सेवितत्वात् पुण्याभिषेकः सम्बुद्ध इति। मुद्राबन्धं विवर्जयेदित्यादि। एतच्चोत्पन्नक्रमयोगिनामुक्तम्। अनाचार्यानिति अगुरून्। संस्कारं समादिशेदिति मोहाविमोक्षेण। पञ्चदशः पटलः।

**पुष्पिका**

डाकिनीवज्रपञ्जरटिप्पणी समाप्ता।

विधाय डाकिनीवज्रपञ्जरस्य सुटिप्पणीम्।
यत्पुण्यमर्जितं तेन जनः सर्वोऽस्तु वज्रधृक्॥

ग्रन्थप्रमाणमध्यष्टशतत्रयम् 350

**विवरण**

प्रस्तुत ग्रन्थ की मातृका राष्ट्रीय अभिलेखागार काठमाण्डू में है, जिसकी फोटो प्रति श्री जगन्नाथ उपाध्याय के व्यक्तिगत संग्रह से उपलब्ध हुई है।

यह टीका-ग्रन्थ है, इसका मूल डाकिनीवज्रपञ्जर अभी तक उपलब्ध नहीं हो सका है। टिप्पणीकार ने जिस प्रकार मूल-ग्रन्थ के प्रतीक लेकर प्रत्येक पद की व्याख्या की है, उससे प्रतीत होता है कि यह ग्रन्थ अत्यन्त महत्त्वपूर्ण होगा। टिप्पणीकार ने भी जो व्याख्या की है, वह अतीव स्पष्ट और सुबोध है। इसमें 15 पटल हैं। पटलों के अन्त में अवान्तर पुष्पिकाओं में विषय-निर्देश नहीं हैं, मूलग्रन्थ उपलब्ध हो जाने पर यह टिप्पणी अधिक उपयोगी हो सकेगी।

## 26. हेरुकाभ्युदयपञ्जिका

**ग्रन्थ**—हेरुकाभ्युदयपञ्जिका 'कतिपयाक्षरा'

**ग्रन्थकार**—कुमारचन्द्र

**ल० सं०**—5-207 **वि० सं०**—151

**पत्र सं०**—1-16, **पंक्ति प्र०प०**—18 **अक्षर प्र० प०**—60

**आधार**—नेपाली कागज, **आकार**—31 × 12 से० मी०

**लिपि**—देवनागरी, **पूर्ण**।

**प्रारम्भ**

श्री नमः श्रीचक्रसंवराय

श्रीहेरुकनमस्कारपुरस्कारेण लिख्यते।
तदभ्युदयतन्त्रस्य पञ्जिका कतिपयाक्षरा॥

अथेत्यादिरहस्यं भगवन्तं श्रीहेरुकमभिधेय उक्तः। विदित्वा भावयित्वेति मार्ग उक्तः। साधको योगी तमेव भगवन्तं स्वाध्यतिभेदेन महामुद्रासिद्धिमायाति प्राप्नोति। प्रयोजनमुक्तम्। इनि भगवानेव मार्गं फलं चोक्तः। समलामलकृतस्तु भेदः। नेत्यादि। तिथ्यादिविकल्परहितस्येत्यादिपदं षष्ठ्यन्तं बोध्यम्।

**अन्त**

ऐन्द्राण्यः पूर्वाः काकास्यादिमातरोऽष्टौ ताभ्यस्तां खण्डखण्डीकृत्य शान्त्यर्थं विदर्भ्य हृदय-मन्त्रेण दद्यात्। तत्स्थानप्रविष्टसर्वोपकरणमाचार्याय दद्यात्। रोगमुक्तिः शान्तिः। ततस्तत्रागतान् सर्वान् स्वापयित्वा वलिमेव तावत् प्रथमं भोजयित्वा अन्यान्यप्योदनादीनि भोजयेत्, वस्त्रादिना च तोषयेत्। ततः शान्तिः कृता भवतीति।

**पुष्पिका**

श्रीहेरुकाभ्युदयमहायोगिनीतन्त्रराजे कुमारचन्द्रकृता
कतिपयाक्षरा पञ्जिका समाप्ता

हेरुकाभ्युदये कृत्वा पञ्जीं यत्पुण्यमर्जितम् ।
तेनाभितोऽस्तु विश्वस्य श्रीहेरुकतयोदयः ॥

गुरुष्वहो शिष्यजनस्य सेवा अहो गुरूणां करुणा च शिष्ये ।
यदत्र तन्त्रेऽभ्युदये गभीरे कुमारचन्द्रोऽपि करोति पञ्जीम् ॥

**विवरण**

इस ग्रन्थ की मातृका राष्ट्रीय अभिलेखालय काठमाण्डू में है, जिसकी फोटो प्रति श्री जगन्नाथ उपाध्याय के व्यक्तिगत संग्रह से उपलब्ध हुई है। उसी के आधार पर विवरण प्रस्तुत किया गया है।

**विषयनिर्देश**

इसमें 45 पटल हैं। यद्यपि मूल आधार ग्रन्थ उपलब्ध न होने से ग्रन्थ के प्रतिपाद्य विषयों को निश्चित रूप में नहीं कहा जा सकता, फिर भी इस पञ्जिका के आधार पर प्रत्येक पटल में वर्णित विषय इस प्रकार हैं—

| पटले | विषयः |
|---|---|
| प्रथमे | सिद्धीनामवतारविधिमुद्राख्यानम् । |
| द्वितीये | मण्डले आलिकाल्यादिलेखनप्रकारः । |
| तृतीये | अष्टपदोद्धारः । |
| चतुर्थे | चतुर्मन्त्रोद्धारः । |
| पञ्चमे | धर्मकामार्थमोक्षात्मकनिर्माणकायमन्त्रः । |
| षष्ठे | सप्ताक्षरोद्धारः । |
| सप्तमे | बाह्याध्यात्मरूपेण पृथिवीत्यादिमुद्रायोगेन कर्मनिर्देशः । |
| अष्टमे | योगिनी(वाराही)वीराद्वयोर्मुद्रायोगेन सर्वकर्मारम्भः । |
| नवमे | लक्ष्यत्रयेण जपभावना । |
| दशमे | सोमपानं कृत्वा जुहोतीति नियमधारणा । |
| एकादशे | अविकासाधननिर्देशः । |
| द्वादशे | हेरुकवाराहीपूजया मुद्रासिद्धिः । |
| त्रयोदशे | हितसुखहेतुर्वशीकरणम् । |
| चतुर्दशे | मण्डलस्थापनगायत्रीजपादिविधिः । |
| पञ्चदशे | गणमण्डलस्थापनादि । |

| | |
|---|---|
| षोडशे | वामाचारवाममोक्षादिनियमाः । |
| सप्तदशे | वश्याकर्षणपरसैन्यविनाशादिविधिः । |
| अष्टादशे | श्मशानादौ शवोत्थापनम् । |
| एकोनविंशे | मन्त्रजपाय वामया सह चन्दनवनभ्रमणम् । |
| विंशे | नैवेद्यविधानम् । |
| एकविंशे | आकर्षणविधिः । |
| द्वाविंशे | खवज्रभावनया वज्रसत्त्वसिद्धिः । |
| त्रयोविंशे | तथागतसमताप्राप्तिः । |
| चतुर्विंशे | आकर्षणोच्चाटनविधिः । |
| पञ्चविंशे | पोतङ्गीसाधनम् । |
| षड्विंशे | चुन्द्रिकासाधनम् । |
| सप्तविंशे | चिन्तामणिवत् सर्वफलदमन्त्रजपः । |
| अष्टाविंशे | हेरुकसाधनेन सिद्धिलाभो नान्येन । |
| एकोनत्रिंशे | परिवर्तनरूपान्तरविधानम् । |
| त्रिंशे | स्वयम्भुकुसुमविधानम् । |
| एकत्रिंशे | षडक्षरमन्त्रसाधनम् । |
| द्वात्रिंशे | मुष्टिमोचनेन मोक्षणम् । |
| त्रयस्त्रिंशे | अन्यथाक्रियस्य दण्डादिविधाननिर्देशः । |
| चतुस्त्रिंशे | समयदेवतासाक्षात्कारः । |
| पञ्चत्रिंशे | विविधकार्येषु हेरुकसाधनम्, तदपकारिणां मृत्युश्च । |
| षट्त्रिंशे | षडक्षरमन्त्रप्रभावः । |
| सप्तत्रिंशे | नागाष्टकसाधनम् । |
| अष्टत्रिंशे | सर्वज्ञताप्तिः । |
| एकोनचत्वारिंशे | विविधदेवतामन्त्राणि । |
| चत्वारिंशे | देवताभ्यो भोजनादिसमर्पणम् । |
| एकचत्वारिंशे | डाकिन्यादीनां विद्यात्वं हेरुकस्य तद्राजत्वम् । |
| द्विचत्वारिंशे | आकर्षणवशीकरणादिप्रयोगाः । |
| त्रिचत्वारिंशे | आस्फानकसमाधिः, सर्वस्य बिन्दौ लीनत्वं च । |
| चतुश्चत्वारिंशे | मण्डलदेवताराधनम् । |
| पञ्चचत्वारिंशे | विसर्जनप्रकारः, ग्रन्थोपसंहारश्च । |

## 27. शिष्यानुग्रहविधिः

**ग्रन्थ**—शिष्यानुग्रहविधि
**पृष्ठ सं०**—13 (8-21), **पंक्ति प्र० पृ०**—18, **अक्षर प्र० पं०**—23
**लिपि** – देवनागरी, **पूर्ण** ।

**प्रारम्भ**

ॐ नमः श्रीवज्रवाराह्यै

अथातो रहस्यं वक्ष्ये गुरोर्वक्त्रानुसारतः ।
नानासाधनसिद्ध्यर्थं शिष्यावेशविधिं पराम् ॥

प्रथमं तावदाचार्यः शिष्यानुग्रहार्थं हेरुकेत्यक्षरचतुष्टययोगवान् स्वमनोनुकूलेस्थाने मृदुमचूल(सूर)-कादौ स्थित्वा कराङ्गविन्यासं कृत्वा पञ्चपीयूषसंयुक्तं दिव्योदकं पद्मभाण्डे संस्थाप्य यथाविधिशोधित-द्रवद्रव्येण चात्मानं मन्त्रस्नातं कृत्वा तदनुष्ठानात्मरक्षार्थं छोटिकादानपूर्वकं सुम्भेत्यादि चतुर्मुखमन्त्र-नादेन सीमाबन्धषट्कवचमन्त्रेणात्मरक्षां त्रिविशुद्धिमन्त्रतत्त्वेन चित्तरक्षां कुर्यात् ।

**अन्त**

तत्रायं मन्त्रः । ॐ अमृतसंजीविनी महा-अमृतमुखी जीवं प्रसय 2 सर्ववज्रपद्मसमायोगे महा-बोधिचित्ताधिष्ठितमूर्ते हूं 2 अ आ अं अः स्वाहा ।

अनेन मन्त्रजापेन मृतं संजीवति सर्वथा ।
अकालमृत्युशमनं मृतं व्युत्थापयेद् ध्रुवम् ॥
अस्य मन्त्रस्य माहात्म्यं सर्वबुद्धैर्नमस्कृतम् ।
सर्वकाममवाप्नोति निर्विघ्नं क्रियते ध्रुवम् ॥

**पुष्पिका**

नहीं है । अवान्तर पुष्पिकायें आगे दी गई हैं ।

**विवरण**

श्री जगन्नाथ उपाध्याय ने नेपाल के किसी व्यक्तिगत संग्रह से देवनागरी में प्रतिलिपि करा कर इसे अपने संग्रह में रखा है । उसी से यह विवरण दिया गया है ।

**विषयनिर्देश**

इसमें प्रतिपादित विषयों का निर्देश इसकी अवान्तर पुष्पिकाओं से हो जाता है, जो इस प्रकार हैं—

इति शिष्यानुग्रहे बाह्यपूजाविधिः
,, ,, कलशाधिवासनविधिः
,, ,, आवेशविधिः
,, ,, गणमण्डलविधिः
,, ,, कौमारीपूजनविधिः
,, ,, वलिकर्मविधिः
,, ,, होमविधिः
,, ,, रक्षाचक्रविधिः
,, ,, निसुम्भविधिः
,, ,, प्रत्यङ्गिराचक्रभावनाविधिः

**विशेष**

श्री शबरपाद आदि आचार्यों ने भी वज्रयोगिनीसाधन आदि में 'शिष्यानुग्रहे' पद लगाया है, किन्तु उपर्युक्त विधियाँ किसी एक ही आचार्य की कृति हैं, जिसका नाम ग्रन्थ में उल्लिखित नहीं है।

## 28. वज्रयोगिन्याः शिष्यानुग्रहविधिः

**ग्रन्थ**—वज्रयोगिन्याः शिष्यानुग्रहविधिः
**ग्रन्थकार**—महापण्डित जयेन्द्रसेन
**पृष्ठ० सं०**—4 (23-26), **पंक्ति प्र० पृ०**—18, **अक्षर प्र० पं०**—27
**लिपि**—देवनागरी, **पूर्ण**।

**प्रारम्भ**

नमः श्रीवज्रयोगिन्यै
विताननितते रम्ये चामरादिप्रलम्बिता(ते)।
विजने मनोरमे स्थाने सुगन्धिकुसुमोज्ज्वले ॥
सुगन्धिजलसंलिप्ते पञ्चामृतसुसिञ्चिते।
नानापूजासुसंपूर्णे उपविश्य सुखासने ॥
स्थित्वा पश्चान्मुखो योगी योगिनीसुसहायवान्।
षड्देवतीकवचमन्त्रेण वामहस्तं विशोध्य च ॥

**अन्त**

मन्त्रस्थां ज्ञानदेवीं तु तथात्मन्युपसंहरेत् ।
तत्सिन्दूरं च रक्षार्थं योगी दद्यात् तदर्थिने ॥
दृष्ट्वा तद्रक्षितं सत्त्वं सिंहाद् मृगगणा इव ।
विघ्ना विनायकाश्चैव पलायन्ते चतुर्दिशम् ॥
श्रीमद्वज्रयोगिन्याः पूजाविधिविधानतः ।
जातपुण्येन लोकोऽयं तज्ज्ञानगुणसागरः ॥

**पुष्पिका**

श्रीवज्रयोगिन्याः शिष्यानुग्रहविधिरुत्तरापथिकपण्डितचन्द्रनाम्नोऽध्येषणया समुद्धृतः महापण्डितजयेन्द्रसेनेन नवगृहपण्डित इति नामान्तरेण ।

**विवरण**

यह ग्रन्थ भी प्रतिलिपि किया हुआ श्री जगन्नाथ उपाध्याय के व्यक्तिगत संग्रह से उपलब्ध हुआ है ।

**विषयनिर्देश**

इसमें ४२ श्लोक हैं, जिनमें वज्रयोगिनी को पूजा का प्रकार, शिष्य को उपदेश ग्रहणार्हता का प्रतिपादन और उपदेश ग्रहण की विधि बताई गई है ।

## 29. हेवज्रप्रकाशः

**ग्रन्थ**—हेवज्रप्रकाश
**ग्रन्थकार**—राहुलगुप्त
**सं०** M.B.B—1971-165-90 (माइक्रोफिश)
**पत्र सं०**—15 (प्रकीर्ण), **पंक्ति प्र० प०**—12, **अक्षर प्र० पं०**—40
**आधार**—ताड़पत्र, **लिपि** - नेवारी (भुजिमोल)
**अपूर्ण** ।

**प्रारम्भ** (उपलब्ध पत्र से)

लम्बोदरो द्विभुजाक्षस्रक्कमण्डलुधरो रक्तचीवरवासा कपिलश्मश्रुः कोणोत्कटः शृण्या····प्रभः···· राक्षसः कृष्णो विमुक्तकेशो दंष्ट्राकरालस्य द्विभुजे कर्तिकपालवान् क्रुद्धो नग्नः सूर्यासनः सूर्यप्रभः वायव्यदलवायुः श्यामो रत्नमुकुटी एकमुखो ललिततनुः सर्वालङ्कारधरः पीतमृगारूढः चन्द्रासनश्चन्द्रप्रभः—

**अन्त**

····श्रीस्त्वमसि क्षमा त्वमसि सा बोधिस्त्वमृद्धिः सतां
मैत्री त्वं करुणा त्वमेव मुदिता त्वं वै········ ।
··········पदवी त्वमेव तथता ताथागती कथ्यसे
प्रज्ञापारमितेति विश्ववपुषे तुभ्यं नमस्कुर्महे ॥

प्रणम्य·······क्षरपाठानन्तरं समयगीतिका पठितव्या ।

वास्तुपूजाविधिस्मृत्यै·······संग्रहात् ।
यन्मया योजितं पुण्यं तेनास्तु लोकोऽयं···· ॥
संक्षिप्तहेवज्रपूजाविधिश्च समाप्तः । ये धर्मा० । नमो बुद्धाय ॥

**पुष्पिका**

श्रीहेवज्रप्रकाशः समाप्तः । कृतिरियं महामूलाचार्यश्रीराहुलगुप्तपादानामिति ।

**विवरण**

इस ग्रन्थ की द इंस्टीटयूट फार एडवांस स्टडीज आफ वर्ल्ड रिलीजन्स, न्यूयार्क से कराई हुई फोटो प्रति श्री जगन्नाथ उपाध्याय के व्यक्तिगत संग्रह से उपलब्ध हुई है ।

इसमें प्रकीर्ण 15 पत्र हैं । प्रारम्भ के 19 पत्र नहीं हैं । जो पत्र हैं, वे भी अव्यवस्थित हैं । मूल ग्रन्थ ताड़पत्र पर लिखा है, वे पत्र भी कोने से टूटे हैं, जिसमें अक्षर लुप्त हो गये हैं । हेवज्र-प्रकाश नाम से प्रतीत होता है यह हेवज्रतन्त्र की टीका होगी, किन्तु यह टीका नहीं स्वतन्त्र ग्रन्थ है और इसमें हेवज्रसाधना की विधि दी गई है । तंजुर-कंजुर के तोहूकू कैटलाग में नं० 1236 में इसके तिब्बती अनुवाद का उल्लेख है और उसमें इसकी पत्र संख्या 41 ( 96-136 ) दी गई है ।

## 30. दशतत्त्वसंग्रहः

**ग्रन्थ**—दशतत्त्वसंग्रह
**ग्रन्थकार**—पण्डित क्षितिगर्भ
**ल० सं०**—3·361,
**पत्र सं०**—31, **पंक्ति प्र० प०**—12, **अक्षर प्र० पं०**—26
**आधार**—ताड़पत्र, **लिपि**—नेवारी
**पूर्ण** ।

**प्रारम्भ**

ॐ नमो वज्रसत्त्वाय
वज्रसत्त्वं गुरुं नत्वा तद्धर्मसूनुसंहतिम् ।
दश तत्त्वानि कथ्यन्ते ज्ञानपादक्रमेण तु ॥

रक्षा चक्रं च चक्रं च जापः सेको हठो वलिः ।
प्रत्यङ्गिरा पुटो घातस्तत्त्वानि क्रमतो दश ॥
हृन्न्यस्तबीजबीजोत्थप्रभाव्यूहैर्जराकृतैः ।
कृत्वा तैरेव बुद्धादीनाकृष्य पुरतो धिया ॥

**अन्त**

खण्डखण्डीकृतं पश्येन्मारितं चूर्णितं तथा ।
नियतं दुर्गतिपरं ···· ···· ···· ॥
करिष्यमाणकर्मत्वं ज्ञायते यदि निश्चितम् ।
तद्विरोधोऽप्यचिन्त्यत्वाद् जायते कर्मणो यतः ॥
इति सम्पुटोद्घातविधिः ।
दश तत्त्वानि संहृत्य यन्मयासादितं शुभम् ।
दशतत्त्वपरिज्ञाता सम्यक् तेनास्त्वसौ जनः ॥

**पुष्पिका**

कृतिरियं दशतत्त्वसंग्रहः पण्डितक्षितिगर्भस्येति ।

**विवरण**

इस ग्रन्थ की मूल मातृका राष्ट्रीय अभिलेखालय काठमांडू में है । उसी की माइक्रोफिश कापी द इंस्टीट्यूट फार एडवांस स्टडीज आफ वर्ल्ड रिलीजन्स, न्यूयार्क में है, जिसकी सं० M.B.B.II—208 है । इसी को श्री जगन्नाथ उपाध्याय ने देवनागरी में प्रतिलिपि कराकर अपने व्यक्तिगत संग्रह में रखा है, जिसके आधार पर यह विवरण तैयार किया गया है ।

**विषयनिर्देश**

जैसा कि ग्रन्थ के प्रारम्भ में कहा है—

रक्षा चक्रं च चक्रं च जापः सेको हठो वलिः ।
प्रत्यङ्गिरा पुटो घातस्तत्त्वानि क्रमतो दश ॥

इसी क्रम से इन दश तत्त्वों का विवरण यहां दिया गया है । प्रथम तत्त्व में हृदयस्थित बीजोत्थ प्रभासमूह में आराध्य का ध्यान, आवाहन, पूजा, वन्दना, देशना, अनुमोदना, शरणगमन और मार्ग का आश्रयण; द्वितीय में मण्डलों की रचना; तृतीय में मण्डलस्थ देवताओं और उनके मन्त्रों का विचार; चतुर्थ में मन्त्रजपविधि; पंचम में सेक (अभिषेक) विधान; छठे में हठ का निर्देश (यहाँ हठ का तात्पर्य यह है कि यदि समाधित्रय और समय-संवर का विधिपूर्वक पालन करने पर भी अभीष्ट सिद्धि न हो, तो पुनः हठयोग की साधना के साथ उसे प्रारम्भ करे । ); सातवें में वलि का विधान—( जिसमें इष्टदेवता की सिद्धि में निर्विघ्नता के लिये लोकपालादि अर्चनाविधि है ); आठवें में प्रत्यङ्गिरा विधान ( प्रत्यङ्गिरा के दो प्रकार दिये हैं—भाव्य प्रत्यङ्गिरा और लेख्य प्रत्यङ्गिरा ); नवें

और दशवें में पुट और घात ( रत्नत्रयापकारी गुरुद्रोहादि में रत दुष्टों को समझाने और न मानने पर मारणादि प्रक्रिया ) का विधान है।

संक्षेप में क्रिया तन्त्र के इन दस तत्त्वों से सम्पन्न व्यक्ति ही साधना कर सकता है।

## 31. ज्ञानावेशविधिः

**ग्रन्थ**—ज्ञानावेशविधि

**ग्रन्थकार**—शून्यसमाधिवज्रपाद

**पृष्ठ सं०**—3, **पंक्ति प्र० प०**—18, **अक्षर प्र० प०**—31

**लिपि**—देवनागरी, **पूर्ण**।

**प्रारम्भ**

नत्वा श्रीवज्रवाराहीं परमां सहजात्मिकाम्।
ज्ञानावेशविधिं वक्ष्ये सदाप्रत्ययकारकम्॥ 1॥
प्रविश्य विजने देशे............................संस्थितम्।
स्थानात्मयोगरक्षार्थं हुंफट्कारमुदीरयेत्॥ 2॥

**अन्त**

मन्त्रानावर्तयेदेतान् यावदावेशसंभवः।
ज्ञानाविष्टो भवेच्छिष्यो रोमाञ्चकं समुज्जीवति॥ 30॥
ज्ञानावेशविधिं विधाय विधिवत् पुण्यं मयाऽऽसादितं
यत्सम्पूर्णससाद्बुधामलवलिं निःशेषदोषापहम्।
भूयात् तेन जगन्निरम्भनिखिलक्लेशा गुणानां निधेः
श्रीमद्वज्रवराहिका भगवती ज्ञानाविशत्सोज्ज्वला॥ 31॥

**पुष्पिका**

समाप्तोऽयं ज्ञानावेशविधिर्योगवरः। कृतिरियं श्रीशून्यसमाधिवज्रपादानामिति।

**विवरण**

यह ग्रन्थ भी श्री जगन्नाथ उपाध्याय के व्यक्तिगत संग्रह में प्रतिलिपि किया हुआ उपलब्ध हुआ है।

**विषयनिर्देश**

इसमें केवल 31 श्लोक हैं। श्लोक 1 से 11 तक बाह्यपूजाविधि, 12 से 23 तक भावनाविधि और 24 से 30 तक ज्ञानावेशप्रयोगानुशंसा विधि वर्णित है।

## 32. प्रज्ञाकर्मसमुच्चयः

**ग्रन्थ**—प्रज्ञाकर्मसमुच्चय
**ग्रन्थकार**—श्रीशून्यसमाधिवज्रपाद
**पृष्ठ सं०**—4 ( 3-7 ), **पंक्ति प्र० पृ०**—18, **अक्षर प्र० पं०**—25
**लिपि**—देवनागरी, **पूर्ण** ।

**प्रारम्भ**

प्रणम्य सहजां प्रज्ञां प्रणष्टाशेषकल्मषाम् ।
प्रज्ञाया विश्वरूपाया वक्ष्ये कर्मसमुच्चयम् ॥
यथोपदेशं संस्थाप्य प्रज्ञां स्फीतां शशिप्रभाम् ।
पुष्टावाप्यायने चाज्ञे धाराकारां प्रयोजयेत् ॥

**अन्त**

पूरयित्वा तयैवाशु भेदयेन्मम मूर्धगम् ।
भवेदुत्क्रान्तिरमुना विधिना योगिनः क्षणात् ॥
द्वारस्योद्घाटनं तेन गच्छतां मुक्तिरुद्भवेत् ।
प्रज्ञाया विश्वरूपाया उक्त्वा कर्मसमुच्चयम् ॥
यन्मयासादितं पुण्यं भूयात् तेन जगज्जिनः ।

**पुष्पिका**

समाप्तोऽयं सिद्धयोगाम्बरमण्डलमध्यगतवीरेश्वरीवीरमुखनिर्गतः प्रज्ञाकर्मसमुच्चयाख्यो योगः । कृतिरियं श्रीमञ्जुघोषाधिष्ठितपण्डिताचार्यश्रीभद्रपादपङ्कजपरागप्रणयिनां पण्डितश्रीशून्य-समाधिवज्रपादानामिति ।

**विवरण**

यह ग्रन्थ भी श्री जगन्नाथ उपाध्याय के व्यक्तिगत संग्रह से उपलब्ध हुआ है, जिसे उन्होंने नेपाल के किसी व्यक्तिगत संग्रह से प्रतिलिपि कराया है ।

**विषयनिर्देश**

इसमें केवल 45 श्लोक हैं । प्रारम्भ में सहजा प्रज्ञा की प्रशंसा एवं पूजा का विधान है । अनन्तर आकर्षण, मोहन, वशीकरण, विद्वेषण, उच्चाटन, स्तम्भन और मारण प्रयोगों के लिये विशेष मन्त्र एवं उनकी प्रक्रिया बताई गई है ।

## 33. महाकालसाधनम्

**ग्रन्थ**—महाकालसाधन

**ल० सं० पं०**—251, **फोटो सं०**—2315

**पत्र सं०**—61 (250-312) **पंक्ति प्र० प०**—7, **अक्षर प्र० पं०**—52,

**आधार**—नेपाली कागज, **लिपि**—नेवारी,

अपूर्ण।

**विवरण**

यह ग्रन्थ राष्ट्रीय अभिलेखालय काठमांडू से फिल्म रूप में आया है, जिसकी जीराक्स कापी के० उ० ति० शि० सं० के ग्रन्थालय से प्राप्त हुई है। यह गायकवाड़ ओरि० सी० बड़ौदा से प्रकाशित 'साधनमाला' के द्वितीय भाग के अन्तिम अंश (पृष्ठ 476 से 585, द्विगुण हेरुकसाधन से महाकाल साधन पर्यन्त) से यथावत् मिलता है। अन्तिम महाकाल साधन के आधार पर इसका नाम रखा गया प्रतीत होता है।

प्रकाशित साधनमाला से इसमें केवल निम्नांकित अन्तर है—

1. साधनमाला पृ० 525 से 528 (ग्रन्थ सं० 267) में स्थित भूतडामर तंत्र इसमें नहीं है।
2. ग्रन्थ सं० 298 आर्यरक्तयमारिसाधनम् के अन्त में 'कृतरियं विरुवापादानाम्' लिखा है।
3. ग्र० सं० 277,278 को 229 के बाद लिखा है।
4. ग्र० सं० 286-287 के बीच को पुष्पिका न देकर दोनों को एक ही ग्रन्थ मान लिया है।
5. 279 के अन्तिम भाग में पर्याप्त पाठभेद है।

यह कोई स्वतन्त्र ग्रन्थ नहीं प्रत्युत साधनमाला ही है।

## 34. वसन्ततिलकतन्त्रम्–(1)

**ग्रन्थ**—वसन्ततिलकतन्त्र

**ग्रन्थकार**—आचार्य श्रीघन

**सं०**—1129

**पत्र सं०**—1-14, **पंक्ति प्र० प०**—12, **अक्षर प्र० पं०**—34

**आधार**—नेपाली कागज, **लिपि**—नेवारी

पूर्ण।

**प्रारम्भ**

नमः श्रीसद्गुरुचरणारविन्देभ्यः

न जातमनन्तमुत श्रीम[द]द्वयसद्गुरुचरणकमलबिन्दुरूपं भवति। स पद्मबिन्दू भवतः। तस्मै विषयमहासुखचक्रसप्तत्रिंशन्महाबोधिवज्रः। यकारं पद्ममित्युक्तं रकारं बिन्दुरूपं ईशान्तम्। ऊकारं नादरूपं भवति। श्रीकारमद्वयं हेकारं हेतुशून्यं रुकारमपगतव्यूहं ककारेण क्वचित् स्थितं पकारे पद्मं नवबिन्दुर्भवति।

**अन्त**

या खड्गाञ्जनपादलेपगुटिकाः पातालखड्गाञ्जनाः
त्रैलोक्योदरवर्ति····सुगताः कर्मानुगाः सिद्धयः ।
याः सर्वाः सुमहर्धयः स्वभुवने सत्यं च कामान्विताः
ताः सर्वाः कलिता वसन्ततिलकायोगप्रभावोदिताः ॥

**पुष्पिका**

इति चर्याव्रतिदशबलाचार्येण गुरूपदेशमागम्य श्रीहेरुकभट्टारकस्यादेशेन स्वप्नगतमवधार्य श्रीवज्रसंवराम्नायनम् आबाह्याभ्यन्तररूपतः स्वरूपविधानतो भावान् स्फुटीकृत्य मन्दमत्यवबोधार्थं सुचिन्तयेद् वसन्ततिलकेति । वज्रवाराह्या एवं श्रीहेरुकस्य दशाचार्यश्रीघनस्य गुरूपदेशमागम्य वसन्ततिलकेति तद्विधानाय ग्रन्थस्येति ।

समाप्तोऽयं वसन्ततिलकेति । शुभं सर्वजगताम् ।

**विवरण**

यह ग्रन्थ आशासफू काजी आर्काइब्ज काठमांडू से ज़ीराक्स होकर आया है, जिसके आधार पर विवरण तैयार किया गया है । 'वसन्ततिलक' नाम से प्रसिद्ध चर्याव्रती श्रीकृष्णाचार्य द्वारा विरचित ग्रन्थ से, जिसका कि दुर्लभ बौद्ध ग्रन्थ शोध योजना से शीघ्र प्रकाशन होने जा रहा है, यह ग्रन्थ भिन्न है । आगे क्रमांक 35 में जिसका विवरण दिया जा रहा है, उससे भी यह भिन्न है । प्रतीत होता है, श्रीकृष्णाचार्य के ग्रन्थ को दशबलाचार्य ने और उनके ग्रन्थ को श्रीघन ने संक्षिप्त करके उपस्थित किया है, क्योंकि प्रत्येक पटल का विषय सबमें एक ही है, प्रतिपादन की शैली भिन्न है ।

**विषयनिर्देश**

इसमें 10 पटल हैं । प्रत्येक पटल की अवान्तर पुष्पिका में उसका विषय इस प्रकार दर्शाया है—

वसन्ततिलकालिङ्ग[ण]पूर्वक्रिया प्रथमः ।
वसन्ततिलकं ध्यात्वा देवतारूपाख्याननिर्देशो द्वितीयः ।
,, ,, ,, कायद्वारभेदाख्याननिर्देशस्तृतीयः ।
वसन्ततिलकाभूमिस्वरूपाख्याननिर्देशश्चतुर्थः ।
,, ,, दशभूमिदशभेदननिर्देशः पञ्चमः ।
वसन्ततिलके सप्तत्रिंशन्नाडीचक्रव्यवस्थाख्याननिर्देशः षष्ठः ।
(लिपिक के प्रमाद से सप्तमनिर्देश की पुष्पिका नहीं है ।)
,, ,, होमक्रियानिर्देशः अष्टमः ।
,, ,, मन्त्रधारणनिर्देशो नवमः ।
,, ,, गत्यागतितन्त्रमन्त्रज्ञानबोधिप्रवर्तनाख्याननिर्देशो दशमः ।

## 35. वसन्ततिलकतन्त्रम् (2)

**ग्रन्थ**—वसन्ततिलक

**ग्रन्थकार**—दशबलाचार्य

**सं०**—1130

**पत्र सं०**—26 (14-39), **पंक्ति प्र० प०**—12, **अक्षर प्र० पं०**—35

**आधार**—नेपाली कागज, **लिपि**—नेवारी, **पूर्ण**।

**प्रारम्भ**

ॐ आ हूं सद्गुरुचरणारविन्देभ्यो नमः।
वन्दे श्रीवज्रसत्त्वं भुवनवरगुरुं सर्वबुद्धे हि वन्तं(?)
नानारूपेण येन तिमिल(र)भयहरं निर्मितं मेरुसंस्थम्।
धर्माधानेन मुनिना जिनगुणसमग्रं मण्डलं वज्रधातुं
सर्वानन्दैकरूपं परमशिवमयं देहिनां मोक्षहेतोः॥

स किं श्रीहेरुकेणात्मालिङ्गितः समो भवति निश्चितो विषयः।। किं भुजेत्र भवति ? भुजं किं चतुर्भुजं किं कुर्यात् भुजाभ्यां वज्रवज्रघण्टालिङ्गितं श्रोहेरुकीभुजद्वयहस्तिचर्माम्बरधराम्—

**अन्त**

कर्ममारुतनिर्धूता ज्वलन्ती नाभिमण्डले।
वाराहीति सुविख्याता वसन्ततिलका स्मृता॥
वालाग्रशतसाहस्रां ता विद्युच्छता(त)समप्रभा[म्]।
देवतीयोगकालेषु नामकू(रू)पाग्रसन्धिषु॥
देवानां चैव बुद्धानामानन्दं जनयेत् पुनः।
नाभिमण्डलमागम्य स्थिता भगवती पूर्ववत्॥

**पुष्पिका**

इति वसन्ततिलकगीतग्रन्थितश्रीमच्छ्रीदशबलाचार्येण इति।
ये धर्मेत्यादि। शुभमङ्गलं भवन्तु। सर्वतोकारे शुभम्।

**विवरण**

आशा सफू काजी आर्काइब्ज काठमांडू से इस ग्रन्थ की जीराक्स प्रति आई है, जिसके आधार पर यह विवरण दिया जा रहा है। इसकी 2 अन्य मातृकाएँ के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में भी उपलब्ध हैं, जिनमें पहली नेपाल राष्ट्रीय अभिलेखालय से फोटो की गई और दूसरी न्यूयार्क से आई माइक्रोफिश प्रति है।

जैसा कि क्रमांक 34 के विवरण में दिया जा चुका है, यह ग्रन्थ भी प्रसिद्ध चर्याव्रती श्री कृष्णाचार्यपाद के ग्रन्थ वसन्ततिलक से भिन्न है और क्रमांक 34 से भी भिन्न है। यद्यपि उसकी पुष्पिका में भी दशबलाचार्य का नाम आया है, किन्तु प्रतीत होता है कि वह इसका संक्षेप है। ग्रन्थालय में उपलब्ध मातृकाओं में इन्हें 'वसन्ततिलकटिप्पणी' कहा गया है। विषय सबमें प्रायः वे ही हैं, जो कृष्णाचार्यपाद के ग्रन्थ में हैं। प्रस्तुत ग्रन्थ में श्लोक भी बीच-बीच में छोड़-छोड़कर प्रायः वे ही लिये गये हैं और कुछ अपनी ओर से जोड़े गये हैं। कहीं-कहीं पदों की व्याख्या भी कर दी गई है।

**विषयनिर्देश**

इसकी अवान्तर पुष्पिकाओं में विषयनिर्देश इस प्रकार है—

1. वसन्ततिलके विधिक्रियाग्राह्यग्राहकभावमार्गालिङ्गनपूर्वचतुरानन्दस्वरूपाख्याननिर्देशः प्रथमः।
2. इति वसन्ततिलके कायस्थितवैरोचनादिदेवतायोगिनीरूपाख्याननिर्देशो द्वितीयः।
3. „ „ यन्त्रात्मकस्वरूपद्वारभेदाख्याननिर्देशस्तृतीयः।
4. इति वसन्ततिलकायां नवस्रोतोभगमध्यगतसर्वनाड़ीसमागतभूमिस्वरूपाख्याननिर्देशश्चतुर्थः।
5. इति वसन्ततिलके पीठादिदशभूमिभेदभेदननिर्देशः पञ्चमः।
6. „ „ सप्तत्रिंशन्नाडीचक्रव्यवस्थाख्याननिर्देशः षष्ठः।
7. „ „ नाडीचक्र-सप्तत्रिंशद्बोधिपाक्षिकाधर्मविशुद्धाख्याननिर्देशः सप्तमः।
8. „ „ होमक्रिया····त्रिंशवीरेश्वरादिहस्ततुष्टनिर्देशोऽष्टमः।
9. „ „ समयाचारप्रभेदनिर्णयोद्देशो नवमः।
10. „ „ महासुखनिर्माणसंभोगालिङ्गणपूर्वकश्रीहेरुको वसन्तो वज्रवाराहीतिलकास्मृताख्याननिर्देशो दशमः।

—: ० :—

# अपभ्रंश वचन संग्रह

—व्रजवल्लभ द्विवेदी—

[ 'धीः' के प्रथम चार अंकों में "लुप्त बौद्ध वचन संग्रह" शीर्षक के अन्तर्गत विभिन्न ग्रन्थों में उद्धृत स्वल्प परिचित ग्रन्थों और ग्रन्थकारों में लुप्तप्राय वचनों का संग्रह आवश्यक टिप्पणियों के साथ किया गया था। प्रस्तुत अंक में उसके स्थान पर अपभ्रंश वचनों का संग्रह दिया जा रहा है। बौद्ध तन्त्रों का और अपभ्रंश भाषा का अटूट सम्बन्ध है। सिद्धाचार्यों ने संस्कृत के साथ अपभ्रंश भाषा में अपनी रचनाएँ प्रस्तुत की हैं। दोहाकोश, चर्यागीतिकोश आदि के रूप में अब तक अपभ्रंश भाषा का यह साहित्य हमारे सामने आया है, किन्तु तन्त्रग्रन्थों में बीच-बीच में प्रसंगवश अपभ्रंश भाषा के वचन मिलते हैं। इनको एक साथ संकलित किया जा सके, तो इस भाषा के गहन अध्ययन में सहायता मिल सकती है। इसी अभिप्राय से यहां हेवज्रतन्त्र, उसकी टीका योगरत्नमाला, सेकोद्देशटीका, क्रियासमुच्चय और वज्रावली में उपलब्ध हुए वचनों को यहाँ संकलित किया गया है। योगरत्नमाला में की गई इन वचनों की व्याख्या और साधनमाला की टिप्पणी में की गई इनकी संस्कृत छाया को भी यहाँ पाठकों की सुविधा के लिये दिया गया है। यहाँ मूल हेवज्रतन्त्र और टीका के पाठों में भिन्नता मिलती है। उनको यहाँ वैसे ही रहने दिया है। ]

## हेवज्रतन्त्र

कोल्लइरे ट्ठिअ बोला मुम्मुणिरे कक्कोला।
घण किविड हो वाज्जइ करुणे किअइ न रोला॥
तहि बरु खाज्जइ गाडे मअना पिज्जइ।
हले कालिञ्जर पणिअइ दुन्दुरु तहि वज्जिअइ॥
चौसम कच्छुरि सिह्ला कप्पुर लाइ अइ।
माल इन्धन शालिञ्ज तहि भरु खाइअइ॥
प्रेङ्खण खेट करन्ते शुद्धाशुद्ध न मुणिअइ।
निरंसुअ अङ्ग चडाबो तहिं ज सराब पणिअइ॥ (क्रि० स० 39-40)
मलयजे कुन्दुरु वाटइ डिण्डिम तहिण्ण वज्जिअइ॥
(2.4.6-8)

खिति जल पवण हूतासानह तुम्हे भाईणि देवो।
सुनह पवञ्चमि ततुमुहु जो ण जानई को वि॥
(2.4.67)

घस्मइ गरलह भक्खाणहि जो निच्चेड्य ण लोअ ।
मोह वैवजिता ततुमण तत्त्व पर तुट्ठअ सोअ ॥
(2.4 71)

इन्द जम जल जक्ख भुत वह्नि वायु रक्ख ।
चन्द सुज्ज माद बप्प तल पाताले अट्ठसप्प स्वाहा ॥
इदं बलि भुञ्ज जिघ्र फुल्ल-धूप-मांस-विड्ड ।
अम्भ कज्ज सव्व साध खन्ति कुणि फेड गाद ॥
(2.4.91-92)

कोल्लगिरिः पीठविशेषः । मुम्मुणिः क्षेत्रम् । बोलकक्कोलेति तदुपलक्षितयोर्योगियोगिन्योर्दूरस्थयोरपि मेलकं सूचयति । घण इति निरन्तरम् । किपिटं दमरुकम् । करुणेति करुणायाऽन्योन्यवाञ्छल्यात् । न क्रियते रोलः कलकलः । किं तत् [न] क्रियत इत्याह—बल इत्यादि । गाढेनेति निर्भरं यथा भवति । हले इति योगिनीनां सम्बोधनम् । कालिञ्जराः समयिनः । [1]दुन्दुराः असमयिनः । चतुःसमादयः समालभ्यन्ते । तहि भरु खाइअ इति । तत्र मेलके निर्भरं खाद्यन्ते । शुद्धः परिनिष्पन्नः । अशुद्ध आदिकर्मिकः । तावुभौ न ज्ञायते । अङ्ग चडाविइऐ इति आरोप्यते । तहिं जेति तत्र शरावे । पाणिऐ इति श्रायोऽपि प्रवेश्य इत्यर्थः । इयता चतस्रो गाथाश्चतुष्पादिकाः । चतसृणां गाथानामन्ते ब्रूवकं गातव्यम् । तदेवाह—मलयजेत्यादि ।

कोल्लगिरौ शिरसि स्थितोऽहङ्कारो बोलः । मुम्मुणि नाभौ अंकारः कक्कोलः । तयोर्योगाद् घनं निरन्तरम्, कृपीटमनाहतध्वनिः । वाजै इति समुच्छलति । करुणेति योगिना न किअइ क्रियते । रोला बाह्ये सुरतमुद्धः । तहि बलेति बलमात्मभावं खाद्यते (खर्जै इति) अनुपलम्भीक्रियते । मयणा पिज्जै इति योगजं महासुखपानं पीयते । कालिञ्जरो वायुः । पणिअइ अन्तः प्रवेश्यते । दुन्दुरा रागादयः क्लेशाः । चतुस्समं रूपस्कन्धम् । कस्तूरिका वेदना । सिह्लकं संज्ञानम् । कर्पूरं विज्ञानम् । लाइलइ मार्जना क्रियते । मालतीन्धनं संस्कारस्कन्धं सर्वेषामहङ्कारास्पदमात्मा । तहीति तत्र योगे । खाद्यते निःस्वभावीक्रियत इत्यर्थः । पेंखण खेड इति । बोधिचित्तद्रवस्य महासुखादागतिः पेंखणम्, पुनर्गतिः खेटः । शुद्धाशुद्धेति भावाभावौ न ज्ञायेते इत्यर्थः । अत एव निरंशुकसाधर्म्यान्निरंशुका रेतोबिन्दवः । अङ्ग इति प्रत्यङ्गनादिभिरारोप्यते । कहि तस्मिन् योगे सर्वधर्मनैरात्मा । सरावपाणिअइ इति । अनुप्रवेशः क्रियत इत्यर्थः । मलयजं नाडीनां मेलकम् । दिण्डिमं सर्वानुपलम्भसमाधिः । न विज्जिअइ इति आत्मसात्क्रियते । (हे॰ त॰ टी॰, प॰ 54a-55a)

खिति जलेत्यादि । खिति निर्माणचक्रम् । जल धर्मचक्रम् । पवनो महासुखचक्रम् । हुताशनः संभोगचक्रम् । तुह्मे इति यूयम् । लोचना-मामकी-पाण्डुरवासिनी-ताराभाजनीभूता देव्यः, किमेनं

1. दुन्दुरो विहेठकः—हे. त. टी., प. 66b.

नाधिगच्छत। हो सुरय नैरात्म्य ! त्वमिह साक्षीभूता तिष्ठसि। नाहं मृषावचनं ब्रवीमि। कस्माद् यूयं मूर्छिताः। अथ कस्मादिदं परमरहस्यमुच्यत इति चेत्—पवञ्चमीति। प्रपञ्चामि विस्तारयामि तत्त्वकथां पारमार्थकथाम्। कोऽपि न जानीतमिति परमकरुणया। यूयं पुनरर्थतत्त्वप्रवीणाः कुतो विस्मयमापन्ना इति भावः। एका व्याख्या।

खितीत्यादि। कमलकुलिशयोर्योगे प्रथमतः काठिन्यज्ञानं पृथिवीधातुः। द्रुतज्ञानमब्धातुः। चालनपरिपाकस्तेजोधातुः। शुक्रसम्भावो वायुधातुः। एतेषां भागिन्यश्चतुर्णामन्यतमान्यतमस्वभावा यूयम्। महासुखज्ञानं सुरयः। तदेव वज्रधररूपम्। प्रपञ्चामीति सत्त्वेभ्यः कथयामि। कुतः ? यस्मान्नेतत् तत्त्वं कोऽपि जानाति। (हे० त० टी०, प० 59b)

यदि मलैराच्छादिताः कथमेषां मोक्ष इत्याह—घुम्म इत्यादि। घूर्ण्यते गरलस्य विषस्य भक्षणे सति लोकः, यो न चेतनो विषतत्त्वाभिज्ञः। मोहविवर्जितो विषतत्त्वपरिज्ञानात्। विषनाशनतत्त्वे मनोऽस्येति तत्त्वमनाः, तस्यैव परं त्रुट्यते। (हे० त० टी०, प० 60a)

इन्द्र यम जल यक्षेति दिक्पतीनां संबोधनमिदम्। भुद वह्नि वायु रक्खेति विदिक्पतीनाम्। चन्देति चन्द्रः। सूर्येति सूर्यः। मादेति पृथिवी माता। बप्पेति पिता। अट्ठेति अष्टौ नागाः। स्वाहेति स्वाहाशब्दः प्रीणनार्थः। एदमिति इदं बलिम्। भुञ्जेति भुङ्क्ष्व। जिघेति जिघ्र। किं तदित्याह—फुल्ल धूपेति पुष्पधूपौ। मांस विंघेति मांसमांसीयम्। विञ्चय वर्धय। अम्ब काज्जं सवं साधेति। अस्माकं कार्यं सर्वं साधय। खान्ति खुणि तत् स्फोटय गात्रात्। (हे० त० टी०, प० 61b)

उट्ठा भराडो करुणमण्ड पुक्कसी महुं परिताहिं।
महासुअ जोए काम महुं छड्डहिं सुण्णसमाहि॥
तोह्या विहुण्णे मरमि हहुं उट्ठेहिं तुहुं हेवज्ज।
छड्डहि सुन्नसभावडा शवरिअ सिह्याउ कज्ज॥
लोअ निमन्तिअ सुरअपहु सुण्णे अच्छसि कीस।
हौं चण्डालि विण्णनमि तइ विण्ण डहमि न दीस॥
इन्दी आली उट्ठ तुहुं हौं जानामि त्तुह चित्तः।
अम्भे डोम्बी छेअमण्ड मा कर करुणविच्छित्तः॥
(2.5.20-23)

[1]आइ न अन्त न मह्य तहिं नत्र भव नत्र निर्वाण।
एहु सो परममहासुह नौ पर नौ अप्पाण॥
(2.5.68)

---

1. यह गाथा सेकोद्देशटीका (पृ० ६३), साधनमाला (पृ० ३८३) और क्रियासमुच्चय (पृ० ३५८) में पाठभेद के साथ मिलती है।

तत्र पुक्कसी तावत् प्रथमं चोदयति—उत्थ भराडो इति । उत्तिष्ठ भगवन्निति । करुणमण्डेति करुणामयमना । पुक्कसी महुमिति पुक्कसीं माम् । परित्राहि इति परित्रायस्व । महासुखेत्यादि । महासुखार्थं योगो द्रवोद्भवहेवज्रमूर्तिः । तेन कामग मां छाडहि त्यज सुण्णसमाहि आकारशून्यं द्रुतसमाधिः ॥ ततः शबरी—तोह्य विहुण्ण इति त्वया विना मरमि म्रियेऽहम् । उत्थ तुहुं हेवज्रेति उत्तिष्ठ त्वं हेवज्रेति । छाड़हि सुण्णसहावड़ा इति त्यज द्रवरूपताम् । शवरी सिह्यउ कज्जेति शवर्याः कार्यं सिद्ध्यतु ॥ ततश्चण्डाली—लोअ निमन्तीति लोकान् निमन्त्रय । सुरअपहु हे सुरतप्रभो शून्येन द्रुतापत्त्या अच्छसीति तिष्ठति (कस्मात्) ? हौं चण्डाली विण्णमीति अहं चण्डाली विज्ञापयामि । तएं विण्ण उउमि न दिस त्वया विनाऽहं दिशो न पश्यामि यः सत्त्वान् दुःखादुद्धरिष्यति । ततो डोम्बी—इन्दिआली उट्ठ तुहमिति हे ऐन्द्रजालिक ! उत्तिष्ठ त्वम् । नाहमेन्द्रजालिक इति चेदाह—हौं जानामि तुअ चित्त जानाम्यहं तव चित्तम् । अम्भे डोम्भी च्छेअमंड़ वयं डोम्बिका नागरिका जानाहि । मा कर करुण विच्छेत्तेति करुणापरिच्छेदं द्रवरूपतया मा कार्षीः(र्षीः) ।

( हे० त० टी०, प० 63a-b )

भगवानाह—आइ न इत्यादि । आदिः परमानन्दः । न मज्झं नापि मध्यमः प्रथमानन्दः । नान्तो विरमानन्दः । नउ भव नउ निर्वाण इति, त्रयाणां यथायोगं भवनिर्वाणरूपत्वात् । एहु सो इति एष स इति वक्ष्यमाणलक्षणः । परममहासुह इति सहजलक्षणः । नउ पर नउ अप्पाण इति ग्राह(ह्य)-ग्राहकवर्जितः ।

अथवा आइ न अन्त न मज्झ तहीति । आदौ क्रियत इत्यादिराचार्याभिषेकः । अन्ते प्रज्ञाभिषेकः । मध्ये गुह्याभिषेकः । तदयं न भवतीत्यर्थः । कुतो न भवतीत्याह—नउ भव नउ निव्वाण । भवन्त्यनेन बुद्धगुणा इति भगवतो मार्गः । आचार्यगुह्याभिषेकौ भवः । निर्वाणस्तृतीयः, तत्प्राप्तौ कृतकृत्यरूपत्वात् । एहु सो इति एष स प्रज्ञाज्ञानाभिषेकः । किं तत्र ? इत्याह—नउ पर नउ अप्पाण । अत्र प्रज्ञोपाययोरनुपलम्भादद्वयप्रकाशः । ( हे० त० टी०, प० 65b )

## हेवज्रतन्त्रटीका

डाकिनीवज्रपञ्जरे

जिम जल सञ्झे चान्द्रमहि नैसो साच्च न मिच्छ ।
तिम सो मण्डलचक्कता तणु सहावें सच्च ॥ ( हे.त.टी., प० 9a )

## साधनमाला

[1]लडहविलआण हिअअं मअणालसघुस्सिरं कअं जेण ।
रअणंकरेण रईअं अलिवम्महसाहणं तेण ॥ ( पृ० 148 )

1. लटभवनितानां हृदयं मदनानलघूर्णितं कृतं येन ।
रत्नाकरेण रचितमलिमन्मथसाधनं तेन ॥

[1]गुहो सिंहो चन्द्रो सुजो एक येसां सापुड।
रुठेल्ल काल कि करइ सो वापुड ॥ (पृ० 371)

[2]अक्खरमन्तविवज्जियओ नउ सो विन्द ण बित्त।
एसो परममहासुहओ नउ फेडिअ णउ खित्त ॥ (पृ० 382)

[3]तं कुरुकुल्लारूप करिये ह्यग्र अहणिसि वीअ ह्न्ते देह्यग्र।
गुरुवअणे दिढ करि माणहु भणअ सबरपा विसढा करे हाणहु ॥ (पृ० 387)

[4]हले सहि विअसिअ कमलु पबोहिउ वज्जें।
अललललहो महासुहेण आरोहिउ [5]णच्चें ॥
रविकिरणेण पफुल्लिउ कमलु महासुहेण।
अललललहो महासुहेण आरोहिउ [5]णच्चें ॥
(पृ० 460, 466-467, 481)

[6]किच्चे णिच्चअ विसाअगउ लोअ णिमन्तिअ काइँ।
तह वत्ता ण जइ सम्भरसि उट्ठहिं सअल विसाइँ ॥
कज्ज अप्पाण वि करिअ पिअ मा करसु विणवि चित्त।
भवभअ पडिआ सअल जणु उट्ठहि जोइ निमित्त ॥
पूव्व पइज्जइ सम्भरसि मा कर कज्ज विसाउ।

---

1. गुहः सिंहश्चन्द्रः सूर्य एको येषां सम्प्राप्तः।
रुष्टः कालः किं करोति स वराकः ॥
2. अक्षरमन्तविवर्जितो न तु स बिन्दुर्न वृत्तः।
एष परममहासुखदो न तु स्फेटितो न तूत्क्षिप्तः ॥
3. तत् कुरुकुल्लारूपं कृत्वा ये ह्यग्रेऽहर्निशं बीजं ह्रीः ते ददत्यग्रे।
गुरुवचने दृढं कृत्वा मानं भणति शबरपादो विषाणां कुरुत हानिम् ॥
4. हले सखि विकसितं कमलं प्रबोधितं वज्रेण।
अललललहो महासुखेनारोपितो नृत्येन ॥
रविकिरणेन प्रफुल्लं कमलं महासुखेन।
अललललहो महासुखेनारोपितो नृत्येन ॥
5. पृ० 466-467,481 पर 'नृत्ये' पाठ है।
6. कृत्ये नित्यं च विषादगतो लोको निमन्त्र्यते कथम्।
तथा वार्ता न यदि संस्मरसि उत्तिष्ठति सकलो विषादेन ॥
कार्यमात्मनोऽपि कृत्वा प्रिय ! मा कुरु द्वयमपि चित्तम्।
भवभये पतिताः सकला जन्तव उत्तिष्ठ योगिनीमित्र ॥
पूर्वपदं यदि संस्मरसि मा कुरु कार्ये विषादम्।

तइ अथमित्ने सअल जणु परिअवज्ज गउसाउ ॥
मिछें माण वि मा करहि पिअ उठ्ठइ सुणसहाव ।
कामहि जोइणि विन्द तुहु फिट्टउ अहवा भाव ॥ ( पृ॰ 501 )

## सेकोद्देशटीका

मूढो अन्तराल परिमाणह ।
तुट्टै मोहजाल गुरु पुच्छिअ जानह ॥
अच्चउ किं बहु वोल्लिऐ धम्मह एह पम्माण ।
आध उग्घाडे लोअणे दिट्ठिविसामे जाण ॥
भुसुकु फुलिङ्गौ अनुपम फुल्ला ।
लेहू रे कुसुम अनग्घ विमुल्ल ॥
एहू सो फुल्ला नानवण्णे ।
सो फुल्ला फुलिङ्गौ सूणारण्णे ॥
सम्बरफुलि लामाकाए अपतिठाण गरूआ ।
भावाभावविमुक्का रसअलइ सुद्ध सुरूआ ॥
चिन्ताचिन्तते पोहा इ गेलिरती ।
दीवा जाली वाट चाहन्ति सान्ती ॥
उइअ उरे भुसुकु तारा ।
शान्ति भणइ पोहान्तपहारा ॥ ( पृ॰ 48.1 )
वामे दाहिणे गुमघाट ।
भणइ काहू अन्तरालें वाट ॥
अनुभाववोहरअण सुट्ठु गूढो ।
मुच्चऊ नाअर बज्झाइ मूढो ॥
फुलिआ पञ्चफुल्ल अवलीना ।
आकटचीअ निरालें दीना ॥
कसी कए लेक अब्भुआ ।
चान्दसुज्ज बान्धि जालिलि क दीवा ॥

---

त्वयि अस्तमिते सकलजन्तवः परिवर्जका गतोत्साह ॥
मिथ्यामानमपि मा कुरु प्रिय उत्तिष्ठ शून्यस्वभाव ।
कामय योगिनीवृन्दं त्वं भ्रश्यतु ( स्फेटतु ) अथवा भावः ॥

हसइ सान्ती सअ आपणकरि सखी ।
आकास विआअल देखी ॥
गम्भीरधर्म सूनिआ बढ तुट्ठो ।
णिसि अन्धारी किम्पि न दिट्ठो ॥
गअणशिहरें जइ फुल्लइ फुल्ला ।
शान्ति भणइ टव्वें तुट्टइ भुल्ल ॥
अन्तरालमणपवणा नयणा ।
एककाल जइ जो धम्म निउणा ॥
अवस उअज्जइ जिनगुणरअणा ।
एत्त उ सअल तथागतवअणा ॥
विविहविजप्पविवज्जिअ चिओ ।
अन्तराल जइ नअणकिओ ॥ ( पृ० 48.2 )

फुड पतिहासइ दहविह मग्ग ।
तहिं योइसर सअल इ लग्ग ॥
णिअमण सअल लक्कन रहिओ ।
अद्ध उघाडें लोअने सहिओ ॥
मज्झे पवण हालइ तव्वें ।
वज्जाण लघुञ्ञा उट्ठइ तव्वें ॥ ( पृ० 48.3 )

अपुब्ब वसन्त दुकेल्ला शवरोऽम्बर फल्लइ फुल्लइ ।
भौडिअ हात्थेन चाहिअइ विरहे केलि करेई ॥ ( पृ० 48.4 )

## क्रियासमुच्चय

हूँ उ देह धनु संसारं तरु । द्वंध्वालिंगण योग धरु ॥
हेवज्र तुहूँ तेन्नाहूँ तेना ते ते हूँ ॥
सुर नर वंदित चरण चरु । कुसुम विशिम्मि तोष कुरु ॥
हेवज्र तुहूँ तेनाहूँ तेना ते ते हूँ ॥
भाव विमुक्त विशेष गुण । कुट्टिअरशानम नमहे ॥
हेवज्र तु हूँ गुण पीठिअई ॥ (पृ० 39)
सुस्म निरंजन परम पहु सुइणे माअ सहाव ।
भावह चीय सहावणौ मासि मइ जाव ॥ लोचनायाः ।

णीम वणौणि वाण तंहि एहु सो महासुह वर्ज्ज ।
जो भावइ भंणे भावनेहिं सो परु साहइ काज्ज ॥ मामक्याः ।
अकस्वरू मंत्र चिज्जिडो णौ सो बिंदु ण चिंता ।
एहु सो परम महासुहो णौ फेडित्ताणौ खिन्न ॥ पाण्डरायाः ।
जिम पडिबिम्ब सहाव अति महा विज्जइ भावा ।
शून्य निरंजन परम पदु नोत्तहि पुणनउ ॥ तारायाः ।
जिम जलम चंद सहिण उसो सच्चणमिहा ।
तिम सो मंडल चक्कडा तनुअ सहावे सछ ॥ वज्रसत्त्वस्य । (पृ० 42-43)
जअ आइ बुद्ध परम खे देहर । जअ काम मोक्त्यधश धम्म हाअ ॥
जअ पंच झाण सुरण महाअ । जअ वज्रपाणि महासुहणाह ॥ (पृ० 343)
ण उत सुमूले ततु दोल गाहेण उषरां तरालं कमलेर योगं ।
शखह सहज विलखण ठाव वाज सिंहरणउ ईउइं जा च ॥ (पृ० 358)

सरहपादैरप्युक्तम्—

नं तं वा गुरु कहई नं तं बुज्झइ शीष ।
सहजावत्थं अमिअ रस कासु कहिबउ कीश ॥ (पृ० 359-360)
इंदीय खे विलीयगौ णद्वउ आप सहाव ।
सोहले सहजानन्द तराउ फुछअ गुरुपादा ॥ (पृ० 360)
ये छिअ सोहि संभावण मेल्ल वह्मण कक्कुर चाण्डाल ।
एक सहावे खाज्ज ॥ (पृ० 403)
स्वागद धर्मण घुरे अमलावधण ।
गाहागाहविवज्जिअ पणमह तत्तिइ ए ॥ (पृ० 403)

## वज्रावली

अक्षक्करू कारुणअ सोहि आमन्त विसारु ।
गणिअअ संखु अलिक्कु सिह्मइ तत्त विसारु ॥ (पृ० 172-173)

डाकिनीवज्रपञ्जरोक्तानाम्—

ॐ इन्द्र यम जल जक्स भुद वह्नि वाउरक्ख चन्द्र सुज्ज मादवप्पतनपताने अट्ठ सप्पएद बलि भुञ्जाजि घ फुल्ल धूप्प मांसविह अम्दकाज्जसव्वसाध खान्ति खुणि फेडगाद स्वाहा ॥ (पृ० 250)

सोहइ वज्जमुल्लालु तारे असत्त्व विघोक्ख ।
धम्म विमोक्ख कज्ज तुङ्ग वज्जङ्ग छाअ धरन्तु ॥ (पृ० 256)

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

—व्रजवल्लभ द्विवेदी, ठिनलेराम शाशनी—

[ इस योजना के स्वरूप पर 'धीः' के प्रथम अंक में प्रकाश डाला जा चुका है। प्रथम दो अंकों में प्रधानतः सेकोद्देशटीका तथा अद्वयवज्रसंग्रह से विशिष्ट पारिभाषिक शब्दों की व्याख्याएँ संकलित की गई थीं। तृतीय अंक में चार ग्रन्थों से तथा चौथे अंक में गुह्यादि-अष्टसिद्धिसंग्रह से पारिभाषिक व्याख्याएँ संगृहीत की गईं। अब इस अंक में हेवज्रतन्त्र और उसकी व्याख्या योगरत्नमाला से पारिभाषिक व्याख्याओं का संकलन किया जा रहा है। ]

**अक्षोभ्यः**

अक्षोभ्यः, क्लेशैर्न क्षुभ्यत इति कृत्वा। (हे० त० टी०, पृ० 19a)

बोधिचित्तं द्रवं यस्माद् द्रव्यमब्धातुकं मतम्।
अपामक्षोभ्यरूपत्वाद् द्वेषो ह्यक्षोभ्यनायकः॥ (हे० त० 2.2.54)

**अद्वयम्**

अद्वयं प्रज्ञोपायद्वयाभासरहितम्। (हे० त० टी०, पृ० 51b)

**अधिष्ठानक्रमः**

स्वसंवेद्यमिदं ज्ञानं वाक्पथातीतगोचरम्।
अधिष्ठानक्रमो ह्येष सर्वज्ञज्ञानतन्मयः॥ (हे० त० 1.8.51)

**अभावः**

न भवतीत्यभावोऽनुत्पादः। तथा चोक्तं भगवता लङ्कावतारे—

भावानभावानिति यः प्रजानते
स सर्वभावेषु न जातु संज्ञते।
यः सर्वभावेषु न जातु संज्ञते
सोऽनिमित्तं स्पृशते समाधिम्॥ (हे० त० टी०, पृ० 5 a)

**अभिषेकः**

अभिषेको हि भावनायाः परिनिष्पत्तिः सकलयोगसाधारणः……। अभिषेको ज्ञानाम्बुधिः। शवासनसर्वावरणक्षालनार्थम्। (हे० त० टी०, पृ० 16b)

**अमिताभः**

द्वयोर्घर्षणसंयोगात् तेजो हि जायते सदा ।
रागोऽमितवज्रः स्याद् रागस्तेजसि संभवेत् ।। (हे० त० 2.2.55)

**अमोघः**

अमोघः सर्वाकारजगदर्थकरणात् । (हे० त० टी०, प० 19 b)

कक्कोलकेषु यच्चित्तं तत् समीकरणरूपकम् ।
ईर्ष्या ह्यमोघसिद्धिः स्यादमोघो वायुसंभवः ।। (हे० त० 2. 2.56)

**अशुद्धः**

अशुद्ध आदिकार्मिकः । (हे० त० टी०, प० 54 b)

**आचार्याभिषेकः**

कर्ममुद्रया चतुःक्षणचतुरानन्दस्वरूपप्रतिपादनं नाम । क्रियातन्त्रादिसाधारणावैवर्तिकाभिषेकलाभमात्रेणाचार्याभिषेकेणाभिषिक्त इत्युच्यते ।

प्रथमं तावद् हेवज्रादौ योगिनीतन्त्रश्रुतचिन्ताभावनाभव्यताकरणार्थमाचार्याभिषेकेणाभिषिच्यते ।....एतदाचार्याभिषेकलब्धमृद्विन्द्रियाणामधिमोक्षमवधार्य कर्ममुद्रया भावनोपदेशः क्रियते । (हे० त० टी०, प० 7 a-b)

आनन्द आचार्याभिषेकः ।....क्वचित् क्रियातन्त्रे देवतानां प्रज्ञोपाययोरनुरागसूचकं हसितं तद्विशुद्धया आचार्य इति आचार्याभिषेकः । (हे० त० टी०, प० 50 a-b)

**आलिः**

अकारादिपञ्चदशस्वरा आलिः ।....आलिश्चन्द्रः । (हे० त० टी०, प० 15 a)

स्थितालिश्चन्द्ररूपेण । (हे० त० 1.8.5.)

प्रज्ञा आलिः । (हे० त० 1.8.11)

**उत्पत्तिक्रमः**

क्रमः प्रकारः । कस्य क्रमः ? समाधेः । चन्द्रचिह्नबीजादिपरिणामेन देवताकारनिष्पत्तिरुत्पत्तिः, सा यस्मिन् समाधौ अस्ति स उत्पत्तिक्रमः । ( हे० त० टी०, पृ० 125 )

**उत्पन्नक्रमः**

उत्पन्नस्वभाविकमेव रूपम् । तदेव तत्त्वरूपेणाधिमुच्यते भाव्यते यस्मिन् योगे स उत्पन्नक्रमः । ( हे० त० टी०, पृ० 125 )

**उपायः**

उपायो महाकरुणा सर्वसत्त्वेष्वात्मसमतानुभवः । (हे० त० टी०, प० 37b)

उपायः पुरुषः स्मृतः । (हे० त० 1.8.28)

**उपेक्षा**

सकलक्लेशोपक्लेशप्रतिपक्षमार्गोपसंहाराकाराम् । ( हे० त० टी, प० 13 b )

**एकवृक्षः**

यस्य च्छाया नान्येन वृक्षेणाक्रम्यते, यश्च नान्यस्याक्रामति स एकवृक्षः ।
( हे० त० टी०, प० 21 b )

**एकारम्**

ए-कारं भगमित्युक्तम् । ( हे० त० टी०, प० 2 a )

**कक्कोलम्**

पद्म कक्कोलकं मतम् । ( हे० त० 2.3.60 )

कक्कोलं सर्वधर्माणां प्रकृतिः । ( हे० त० टी०, प० 52a-b )

मुंमुणि नाभौ अंकारः = कक्कोलः । ( हे० त० टी०, प० 54b )

**कपालः**

कपालं पद्मभाजनम् । ( हे० त० 2.3.58 )

कं सुखं पालयतीति कपालं कमलम् । ( हे० त० टी०, प० 62a )

**करुणा**

सर्वदुःखापनयनाकारां करुणाम् । (हे० त० टी०, प० 13b )

सालम्बनभावना करुणा । ( हे० त० टी०, प० 23b )

**कर्पूरकम्**

शुक्रं कर्पूरकं मतम् । ( हे० त० 2.3.59 )

कर्पूरं.................................सर्वयोगिनीसंभवम् ।
सहजानन्दस्वभावं चाव्ययं पीवरं खगम् ॥ ( हे० त० 2.4.27 )
कर्पूरमेव नैरात्म्या सुखं नैरात्म्यरूपिणम् ।
तस्य सौख्यं महामुद्रा संस्थिता नाभिमण्डले ॥ ( हे० त० 2.4.40 )

**कस्तूरिका**

मन्त्रं कस्तूरिका स्मृता । ( हे० त० 2.3.59 )

**कालिः**

ककारादिचतुस्त्रिंशद्व्यञ्जनानि कालिः । कालिः सूर्यः । ( हे० त० टी०, प० 15a )

कालिरूपेण भास्करः । ( हे० त० 1.8.5 )

काली उपायः । ( हे० त० 1.8.11. )

**कालिञ्जरः**

भव्यं कालिञ्जरं मतम् । ( हे० त० 2.3.57 )

कालिञ्जराः समयिनः । ( ( हे० त० टी०, प० 54a )

कालिञ्जरो वायुः । ( हे० त० टी, प० 54 b )

**कुण्डम्**

शान्तिके वर्तुलं कुण्डं चतुरस्रं तु पौष्टिके ।
त्रिकोणं मारणे प्रोक्तं शेषानत्रैव साधयेत् ॥
एकहस्तार्धहस्तं वाऽधोर्ध्वे तु शान्तिकं भवेत् ।
द्विहस्तमेकहस्तं च अधोर्ध्वे पौष्टिकं मतम् ।
विंशत्यङ्गुलमर्धं च अधोर्ध्वे मारणं भवेत् ।
शुक्लवर्णं भवेच्छान्तौ पीतं तु पौष्टिके तथा ॥
मारणे कृष्णवर्णं च वश्ये रक्तं प्रकीर्तितम् ।
यथा वश्ये तथाकृष्टौ द्वेषादौ यथा मारणे ॥
तिलं शान्तौ दधि पुष्टौ मारणे कण्ठकं तथा ।
द्वेषादौ कण्ठकं प्रोक्तं वश्य आकृष्टौ चोत्पलम् ॥

( हे० त० 2.1.6-10 )

**कुन्दुरुः**

द्वीन्द्रिययोगं कुन्दुरुम् । ( हे० त० 2.3.60 )

**कुलम्**

वज्र पद्म तथा कर्म तथागत रत्नैव च ।
कुलानि पञ्चविधान्याहुरुत्तमानि महाकृप ॥····
कुलानि षड्विधान्याहुः संक्षेपेण तु पञ्चधा ।
पश्चाच्च त्रैविध्यं यान्ति कायवाक्चित्तभेदेन ॥
कुलानां पञ्चभूतानां पञ्चस्कन्धस्वरूपिणाम् ।
कल्यते गण्यतेऽनेन कुलमित्यभिधीयते ॥

( हे० त० 1.5.5; 9-10 )

कुलं पञ्चविधं ख्यातं वर्णभेदेन भेदितम् ।
सन्ध्याभाषत एवं स्युर्बुद्धाश्च पञ्चकौलिकाः ॥
डोम्भी वज्रकुली ख्याता नटी पद्मकुली तथा ।
चण्डाली रत्नकुली चैव द्विजा ताथागती मता ॥

रजकी कर्मकुली चैव एता मुद्राः सुसिद्धिदाः।
आसां शुक्रं भवेद् वज्रं पूजयित्वा पिबेद् व्रती ॥
( हे० त० 3.3.61-63 )

**कृपीटम्**

कृपीटं डमरुकं मतम् । ( हे० त० 2.3.57 )

**क्रमद्वयम्**

क्रममुत्पत्तिकं चैव उत्पन्नक्रममेव च ॥
क्रमद्वयं समाश्रित्य वज्रिणां धर्मदेशना ।
उत्पत्तिभागं कथितमुत्पन्नं कथयाम्यहम् ॥
( हे० त० 1.8.24-25 )

**खेटः**

गतिः खेटः । ( हे० त० 2.3.56 )

**गुह्याभिषेकः**

गुह्यस्थितमणिना यद् गुरूपदेशतः क्षणचतुष्टयात्मकानन्दचतुष्टयस्य वेदनं तद् गुह्याभिषेक इत्युच्यते, प्रपञ्चभावनाभिर्योगिनामप्रकाश्यत्वात् ! अत्राभिषेके मध्येन्द्रियाणां समयमुद्राभावनोपदेशः कथ्यते । ( हे० त० टी०, प० 7b )

परमानन्दो गुह्याभिषेकः । ····कचिच्चर्यातन्त्रे प्रज्ञोपाययोरनुरागसूचकमन्योन्यनिरीक्षणं तद्विशुद्धया गुह्याभिषेकः । ( हे० त० टी०, प० 50 a-b )

**गूथम्**

गूथं चतुःसमं प्रोक्तम् । ( हे० त० 2.33.59 )

**चक्रम्**

चक्रं निवहं खधात्वाख्यं विषयादीनां विशोधनम् ।
बोलकक्कोलयोगेन तस्य सौख्यं प्रतीयते ॥
( हे० त० 2.3.28 )

**चक्रचतुष्टयम्**

धर्मसंभोगनिर्माणं महासुखं तथैव च ।
योनिहृत्कण्ठमस्तेषु त्रयः काया व्यवस्थिताः ॥
अशेषाणां तु सत्त्वानां यत्रोत्पत्तिः प्रगीयते ।
तत्र निर्माणकायः स्यान्निर्माणं स्थावरं मतम् ॥

उत्पद्यते निर्मीयते अनेन नैर्माणिकं मतम् ।
धर्मश्चित्तस्वरूपं तु धर्मकायो हृदि भवेत् ॥
संभोगं भुञ्जनं प्रोक्तं षण्णां वै रसरूपिणाम् ।
कण्ठे संभोगचक्रं च महासुखं शिरसि स्थितम् ॥....
स्थावरी निर्माणचक्रे तु निर्माणं स्थावरं यतः ।
सर्वास्तिवादो धर्मचक्रे च धर्मवादसमुद्भवः ॥
संविदी संभोगचक्रे च कण्ठे संवेदनं यतः ।
महासंघी महासुखचक्रे च महासुखं के स्थितं यतः ॥

( हे० त० 2.4.52-55, 59-60 )

**चतुर्थाभिषेकः**

तथतास्वभावं येनाभिषेकेण पश्यति प्रतिपाद्यते वा । तत्पुनर्बाह्यमुद्रया यद्गुरूपदेशतः प्रति-नियतदेशापरिच्छेदलक्षणसम्पदमनालम्बनयोगेनालम्बनीकरोति, तच्चतुर्थाभिषेक इत्युच्यते । न पुनर्गुरूपदेशकथनमात्राच्चतुर्थाभिषेक इति स्यात् ।........तस्मिन् चतुर्थाभिषेकसमय एवाधि-मात्रतरसत्त्वानां महामुद्रासिद्धिर्भवति । ( हे० त० टी०, प० 8a-b )

सहजानन्दश्चतुर्थाभिषेकः ।....क्वचिदनुत्तरादौ प्रज्ञोपाययोर्द्वन्द्वतन्त्रणं द्वन्द्वसमापत्तिः, तद्विशुद्धि-श्चतुर्थाभिषेकः । (हे० त० टी०, प० 50a-b)

**चर्या**

गुरुबुद्धानामाज्ञया दुष्करव्रतचरणं चर्या । ( हे० त० टी०, प० 21a )

चर्यापि त्रिविधा कथिता—सप्रपञ्चता, निष्प्रपञ्चता, अतिनिष्प्रपञ्चता चेति । इयं निष्प्र-पञ्चता चर्या मध्येन्द्रियाणामुक्ता । अधिमात्रेन्द्रियाणां पुनर्वक्ष्यति चतुर्दशे पटले........अत्यन्त-निष्प्रपञ्चचर्या । मृद्विन्द्रियाणां प्रपञ्चताचर्यायाः सूचनामात्रं कथयिष्यति द्वितीयकल्पस्य सप्तमे पटले । ( हे० त० टी०, प० 23a-b )

**छोमा**

छोमा मिलिच्छा योगिनीनां संकेतेनाभिसमयजल्पनम् । ( हे० त० टी०, प० 23b )

**जननी**

जननी भण्यते प्रज्ञा जनयति यस्माज्जगत् । ( हे० त० 1.5.16 )
महासुखाकारेण विश्वस्य जननाज्जननी । ( हे० त० टी०, प० 20a )

**जपः**

जल्पनं जपमाख्यातमालिकाल्योः प्रजल्पनात् । ( हे० त० 1.5.19 )

**डाकिनी**

"डै विहायसगमने" धातुरत्र विकल्पितः। सर्वाकाशचरी सिद्धिः। डाकिनीति डाकिनीच्छयेति भगवता व्याख्यातत्वात्। डाकिन्यो वज्रडाकियोगिन्यः। ( हे० त० टी०, प० 49b )

**डिण्डिमम्**

अस्पर्शं डिण्डिमं प्रोक्तम्। ( हे० त० 2.3.58 )

**डोम्बी**

अस्पर्शा भगवती यस्मात् तस्माद् डोम्बी प्रकथ्यते। ( हे० त० 1.5.18 )
इन्द्रियाणामगोचरत्वेन डोम्बीशब्देनोच्यते। ( हे० त० टी०, प० 20a )

**तत्त्वम्**

वक्तुरन्तः स्फुरत्तत्त्वं श्रोता साक्षान्न पश्यति।
किन्तु शब्दादुदेत्यस्य विकल्पप्रतिबिम्बकम्॥
स्वविकल्पशतैस्तैस्तैः कल्पयन् तत्त्वभावनाम्।
विकल्पाकुलसन्तानः कस्तत्त्वमवभोत्स्यते॥ ( हे० त० टी०, प० 8b )

**तत्त्वचतुष्टयम्**

आत्मतत्त्वम्।............देवतानां हेवज्रादीनां स्वभावास्तत्त्वम्।.......मन्त्र एव तत्त्वम्।........ ज्ञानमेव तत्त्वं निष्प्रपञ्चमनुत्तरमहासुखज्ञानम्। ( हे० त० टी०, प० 9a )

**तथता**

सर्वेषां खलु वस्तूनां विशुद्धिस्तथता स्मृता। ( हे० त० 1.9.1 )
तथता, भूतकोटिः, धर्मधातुरित्यनर्थान्तरम्। ( हे० त० टी०, प० 8a )

**तथागतः**

तथतायां गतः श्रीमानागतश्च तथैव च।
अनया प्रज्ञया युक्त्या तथागतोऽभिधीयते॥ ( हे० त० 1.5.8 )

**दुन्दुरम्**

अभव्यं दुन्दुरं ख्यातम्। ( हे० त० 2.3.7 )
दुन्दुरा असमयिनः। ( हे० त० टी०, प० 54a )
दुन्दुरा रागादयः क्लेशाः। ( हे० त० टी०, प० 54b )

**दुहिता**

गुणस्य दुहनात् प्रज्ञा दुहिता च निगद्यते। ( हे० त० 1.5.18 )
निरुत्तरबुद्धगुणानां परिपूरणाद् दुहिता। ( हे० त० टी०, प० 20a )

**दृष्टयः**

समा क्रूरा ललाटी च पातना कथिता सदा ।
वश्या वामाश्रिता दृष्टिः पुत्तली द्वौ च वामतः ॥
आकृष्टिर्दक्षिणे भागे पुत्तली द्वौ हि चोर्ध्वतः ।
मध्यमा स्तम्भना दृष्टिर्द्वौ च नासाजडान्तरे ॥
पूतना रेचकेनैव कुम्भकेन वशीकरेत् ।
पूरकेणैव त्वाकृष्टिः प्रशान्तकेन स्तम्भना ॥
पातना स्निग्धवृक्षेषु वश्या पुष्पे प्रकीर्तिता ।
आकृष्टिर्वज्रवृक्षेषु स्तम्भना सचले तृणे ॥ ( हे० त० 1.11.1-4 ) ।

चतस्रो दृष्टयः—पातना, वश्या, आकृष्टिः, स्तम्भना चेति । समा अवक्रा क्रूरा सक्रोधा ललाटीपुत्तलीभ्यां ललाटाश्रिता पातना । या वामाश्रिताभ्यां वामप्रेक्षणी सा वश्या । या ऊर्ध्वाश्रिताभ्यां दक्षिणप्रेक्षणी सा आकृष्टिः । या तु नासाजटाश्रिताभ्यां संमुखप्रेक्षणी सा स्तम्भना । ( हे० त० टी०, प० 42a ) ।

**देवता**

देहे संभवतीत्यस्माद् देवतेति निगद्यते । (हे० त० 1.5.14)

**धर्मधातुः**

मृतकं धर्मधात्वात्मकं विदुः । (हे० त० 1.3.4.)
मृतको हि निरात्मकः, नैरात्म्यं च धर्मधातुः, धर्मधातुनिष्ठाश्च डाकडाकिन्यः ।
(हे० त० टी०, प० 14b)

**धर्मोदयः**

धर्मा आर्यधर्माः, तेषां समुदयोऽस्मिन्निति धर्मोदयो धर्मधातुः । इह तन्मुद्रायोषित्कमलं धर्मोदयः । (हे० त० टी०, प० 33b)

**नरकः**

नरकं नरकपालम् । (हे० त० टी०, प० 64 b)
महानरकं द्विजकपालम् (हे० त० टी०, प० 67 b)

**नर्तकी**

नर्तकी भण्यते प्रज्ञा चञ्चलत्वान्महाकृप । (हे० त० 1.5.18)
आदिकर्मिकसत्त्वैः स्थिरीकर्तुमशक्यत्वान्नर्तकी । (हे० त० टी०, प० 20a)

**निरंशुकम्**

अस्थ्याभरणं निरंशुकम् । (हे० त० 2.3.56)

**निर्वाणम्**

संसाराद् ऋते नान्यन्निर्वाणमिति कथ्यते ।....
अमी धर्मास्तु निर्वाणं मोहात् संसाररूपिणः । (हे० त० 2.4.32,34)

**पञ्चरत्नानि**

पञ्चरत्नानि प्रवाल-मुक्ता-राजावर्त-सुवर्ण-रौप्याणि । ( हे० त० टी०, प० 40 a)

**पञ्चाकाराभिसम्बोधिः**

आदर्शज्ञानवांश्चन्द्रः समतावान् सप्तसप्तिकः ।
बीजैश्चिह्नैः स्वदेवस्य प्रत्यवेक्षणमुच्यते ॥
सर्वैरेकमनुष्ठानं निष्पत्तिः शुद्धिधर्मता (1.8.6-7)
(हे० त० टी०, प० 15 b)

आदर्शज्ञानरूपा सा समताज्ञानभाविनी ।
सद्भूतप्रत्यवेक्षा च कृत्यानुष्ठान सैव तु ॥
सुविशुद्धधर्मधातुः सा (हे० त० 2.4.46-47)

**पञ्चामृतम्**

पञ्चामृतेनेति दधि-दुग्ध-घृत-गोमूत्र-गोमयैः । (हे० त० टी०, प० 11 b)
पञ्चामृतेनेत्याध्यात्मिकेन । (हे० त० टी०, प० 11 b)

**पद्मभाजनम्**

पद्मभाजनं कपालम् । (हे० त० टी०, प० 64 a)

**परमरतिः**

परमरतिः परमा प्रज्ञा प्रभास्वरलक्षणं ज्ञानम् । (हे० त० टी०, प० 40 b)

**पानम्**

करुणा पीयते नित्यं सर्वसत्त्वार्थहेतुना ।
योगपानरतो योगी नान्यपानेन मज्जनम् ॥ (हे० त० 1.6.26)

सालम्बनभावना करुणा । तस्य महासुखरसास्वादः पानम् । तदेव पीयते नित्यमहर्निशं जगदर्थकरणाय ।....योगः समाधिः । स एव पानम् । तत्रैव रतिः प्रीतिः । अतो नान्यन्मदिरादिपानेन चर्यायोगेनामज्जनं कर्तव्यम्, मोहप्राधान्यान्महान् योगविघ्नः स्यात् । (हे० त० टी०, प० 23b)

**पुद्गलः**

पूर्यते कर्मभिर्गलति तेषामेव निर्जरणात् । (हे० त० टी०, प० 38 a)

**प्रज्ञा**

योषित् तावद् भवेत् प्रज्ञा । (हे० त० 1.8.28)

सर्वधर्माणां शून्यता । (हे० त० टी०, प० 37 b)

**प्रज्ञाज्ञानाभिषेकः**

प्रकृष्टं ज्ञानं प्रज्ञा सर्वधर्मस्वचित्तमात्रताज्ञानम्, तत्प्रतिपादनार्थमभिषेकः प्रज्ञाज्ञानाभिषेकः । ·····बाह्यमुद्रया तत्प्रज्ञाज्ञानं वेदितव्यम् । तस्मिन्नभिषेकेऽभिषिक्तेऽधिमात्रेन्द्रियाणां मायोपमसमाधिर्धर्ममुद्रोपदेशः कथ्यते । (हे० त० टी०, प० 7 b)

**प्रज्ञाभिषेकः**

विरमानन्दः प्रज्ञाभिषेकः ।·····क्वचिद् योगतन्त्रे प्रज्ञोपाययोरन्योन्यलिङ्गनं तद्विशुद्धिः प्रज्ञाभिषेकः । (हे० त० टी०, प० 50 a-b)

**प्रतिष्ठा**

पटादिषु देवतानामवस्थानं प्रतिष्ठा । (हे० त० टी०, प० 42 b)

**प्रङ्खणम्**

आगतिः प्रेङ्खणं प्रोक्तम् । (हे० त० 2.3.57)

**फलचतुष्टयम्**

एवंकारे च निष्यन्दं विपाकं धर्मचक्रतः ।
पुरुषकारं सम्भोगे वैमल्यं सुखचक्रके ॥
फलं चतुर्विधं प्रोक्तं निस्यन्दाद्यैर्विभेदितम् ।
कर्मभुग् भगवती प्रज्ञा कर्ममारुतचोदिता ॥
यथा कृतं तथा मुक्तं निस्यन्द इति शब्दितम् ।
विपाकं तद्विपर्यासं कर्मण्यल्पे महत्फलम् ॥
पुरुषकारमुपार्जनं वैमल्यं योगशुद्धितः ॥ (हे० त० 2.4.56-58)

एवंकारो योनिचक्रम्, तत्र निष्यन्दफलम् । धर्मचक्रे विपाकफलम् । संभोगचक्रे पुरुषकारफलम् । महासुखचक्रे वैमल्यफलम् । ·········कर्ममुद्राभावनया प्रपञ्चलक्षणया तदनुरूपया प्रपञ्चचर्यया वक्ष्यमाणया संहरणस्फुरणादिना यथा आत्मनो वज्रधरकायो जगदर्थकारी कृतः, तथायं भुञ्जनप्राप्तो निष्यन्द इति शब्दितम्, निस्यन्दो हि हेतुसदृश इति वचनात् । विपाकमिति तद्विपर्यासम्, सदृशाद् विपरीतम् । तल्लक्षणं धर्ममुद्रायामस्तु । तथाहि—धर्ममुद्रायां मायोपमसमाधिना निष्प्रपञ्चचर्यायां विहरन् सन् स्वल्पेऽपि कर्मणि महत्फलं वज्रधरपदं प्राप्नुयात् । महामुद्रायां संभोगे च पुनः पुरुषकारफलम् । तथा ह्यत्यन्तनिष्प्रपञ्चचर्यया आत्मनः पौरुषेयं

साध्यं फलम्, अतः पुरुषकारफलम्, हीनवीर्याणां तत्राधिकाराभावात्। वैमल्यमिति। योगो महामुद्रायोगः, तस्य विशुद्धिः सेकानन्तरं महामुद्रासिद्धिः। तथा हि—अस्य कल्पासंख्येय-भावनाविशुद्धधियामधिमात्रेन्द्रियाणां भावनानिरपेक्षैव महामुद्रासिद्धिः। फलं महासुखचक्रके स्थितम्। (हे० त० टी०, प० 58a-59b)

**बलम्**

बलं मांसम्। (हे० त० 2.3.56)

**बिम्बनिष्पत्तिः**

तेन बीजेन देवतादेहस्य विश्वदलकमलकर्णिकारस्थितसूर्यादिमण्डलोपरि शवारूढस्यार्धपर्यङ्क-ताण्डवकारिणो निष्पत्तिर्बिम्बनिष्पत्तिः। (हे० त० टी०, प० 14 a)

**बीजसंग्रहः**

तस्मिन्नेव प्रभास्वरे (चित्ते) यथायोगं सूर्यादिमण्डलोपरि किरणमालिदेवताबीजं दृष्ट्वा तस्माद् बीजाद् योगिनीकुलानन्तनिर्माणेन जगदर्थं कृत्वा तस्मिन्नेव बीजे समुपसंहारो बीजसंग्रहः।
(हे० त० टी०, प० 13b-14a)

**बुद्धः**

सत्त्वा बुद्धा एव किन्तु आगन्तुकमलावृताः।
तस्यापकर्षणात् सत्त्वा बुद्धा एव न संशयः॥ (हे० त० 2.4.69)
न बुद्धो लभतेऽन्यत्र लोकधातुषु कुत्रचित्।
चित्तमेव हि संबुद्धो न बुद्धोऽन्यत्र दर्शितः॥ (हे० त० 2.4.75)

वस्तूनि सर्वधर्मास्तेषां बुद्धः सर्वाकारज्ञानं तेन ज्ञानेनाहं बुद्धः। (हे० त० टी०, प० 46 a)

**बोधः**

बोधो ग्राह्यग्राहकरूपेण प्रतिपत्तिः। (हे० त० टी०, प० 33a)

**बोधिचित्तम्**

बोधिचित्तं भवेच्चन्द्रं पञ्चदशकलात्मकम्।
आलिरूपं महासौख्यं योगिन्यस्तस्यांशकाः॥ (हे० त० 2 4.26)
मण्डलचक्राद्युपायेन स्वाधिष्ठानक्रमेण च।
बोधिचित्तमुत्पादयेद् वैवृतिसंवृतिरूपकम्॥
संवृतं कुन्दसंकाशं विवृतं सुखरूपिणम्।
स्त्रीकक्कोलसुखावत्यामेवंकारस्वरूपके ॥
सुखस्य रक्षणादेव सुखावतीति शब्दितम्। (हे० त० 2.4 29-31)

शून्यताकरुणाद्वयस्वभावं बोधिचित्तम्। (हे० त० टी० प० 9a)

**बोधिचित्तं महासुखम्**

बोधिचित्तं महासुखमिति सकलक्लेशोपक्लेशजनितदुःखक्षयरतिलक्षणम् ।(हे०त०टी०, प० 52a)

**बोलः**

वज्रं बोलकं ख्यातम् । (हे० त० 2.3.60)

बोलो महाकरुणामयश्चित्तवज्रः । (हे० त० टी०, प० 52 a)

कोल्लगिरौ शिरसि स्थितो हूंकारो बोलः । (हे० त० टी०, प० 54 b)

**भक्षम्**

भक्षं तृप्तिकरं ज्ञेयम् । (हे० त० 2.3.58)

**भगवान्**

भगवानिति हेवज्रमूर्तिर्वज्रधरः । (हे० त० टी०, प० 1b)

भगोऽस्यास्तीति बुद्धस्य भगवानिति कथ्यते ।
भगानि षड्विधान्याहुरैश्वर्यादिगुणाखिलाः ।
अथवा क्लेशमाराणां भञ्जनाद् भगवानिति ॥ (हे० त० 1.5.15)

**भगिनी**

भगिनीति तथा प्रज्ञा विभागं दर्शयेद् यथा । (हे० त० 1.5.16)

संवृतिपरमार्थयोर्विभागकथनाद् भगिनी । (हे० त० टी०, प० 20 a)

**भवः**

भवः संसारः ।·····चन्द्रसूर्यचिह्ने परिणामेन भवतीति भवो देवताकारः । (हे०त०टी०, प० 48a)

**भावः**

सर्वे ते शुद्धभावा हि यस्माद् बुद्धमयं जगत् । (हे० त० 1.9.4)

भवत्युत्पद्यते गतेर्गत्यन्तरमिति भावः, पञ्चस्कन्धलक्षणं शरीरम् । (हे० त० टी०, प० 4 b)

**भूतकोटिः**

सर्वधर्माणां प्रकृतिस्तथता भूतकोटिः स्वभाव इति पर्यायाः । ( हे० त० टी०, प० 41a )

परमार्थतो निर्वाणं सर्वेषां भूतकोटिः । ( हे० त० टी०, प० 57b ) ।

**भूमयः ( द्वादश )**

मुदिता, विमला, अर्चिष्मती, प्रभाकरी, सुदुर्जया, अभिमुखी, दुरङ्गमा, अचला, साधुमती, धर्ममेघा, समन्तभद्रा, निरुपमा, ज्ञानवती चेति । त्रयोदशी भूमिस्तु अप्रतिष्ठितनिर्वाणधातु-रूपा । ( हे० त० टी०, प० 25b ) ।

**मण्डलम्**

मण्डलं पादलेखः स्यान्मलनान्मण्डलमुच्यते । ( हे० त० 1.45,19 )
मण्डलं सारमित्युक्तं बोधिचित्तं महत्सुखम् ।
आदानं तत्करोतीति मण्डलं मलनं मतम् ॥ ( हे० त० 2.3.27 )

मण्डलं सारमित्युक्तम् । महासुखं ज्ञानं लाति गृह्णातीति मण्डलम् । किं तत् ? पादलेखः । पादाङ्गुष्ठयोर्दृढाकुञ्चनम् । मलनाद् मण्डलमुच्यते ॥ "मल मल्ल धारणे" धातुः, महासुखस्य धारणान्मण्डलमुच्यते । ( हे० त० टी०, प० 20b )

मण्डलशब्दः सारपर्यायः········ततः पारमार्थिकमण्डलम् । ( हे० त० टी०, प० 52a )

**मदनम्**

मदनं मद्यम् । ( हे० त० 2.3.56 )

**मन्त्रः**

मननात् त्राणनाच्च मन्त्रः, शून्यताकरुणाद्वयस्वभावं बोधिचित्तम् ( हे० त० टी०, प० 9a )
परमार्थमननाद् जगत्त्राणनाच्च मन्त्रः । पारमार्थिकबोधिचित्तं मन्त्रः, मन्त्रनिष्यन्दत्वात् ।
( हे० त० टी०, प० 11a )

**मन्त्रनयः**

मन्त्रनयमिति पञ्चविधं क्रिया-चर्या-योग-योगोत्तर-योगनिरुत्तरभेदेन ।
( हे० त० टी०, प०68a )

**मरणम्**

मरणं मोक्षः, तत्रैव चित्तचैतसिकाविद्यालक्षणानामस्तंगमात्, तदेव मरणम् ।
( हे० त० टी०, प० 21a )

**मलयजम्**

मलयजं मिलनं मतम् । ( हे० त० 2.3.56 )

**महाचित्तम्**

महासुखरूपं चित्तं महाचित्तम् । ( हे० त० टी०, प० 49a )

**महामुद्रा**

····महामुद्रा संस्थिता नाभिमण्डले ।
आदिस्वरस्वभावा सा धीति बुद्धैः प्रकल्पिता ।
सैव भगवती प्रज्ञा उत्पन्नक्रमयोगतः ॥ ( हे० त० 2.4.40-41 )

महामुद्रेति परमा मुद्रा, आध्यात्मिकीति यावत् । ( हे॰ त॰ टी॰, प॰ 57a )

उत्पन्नक्रमपक्षे सैव मुद्रा सैव सहज इति । ( हे॰ त॰ टी॰, प॰ 57a )

**मातरः**

मातर इति चक्षुश्रोत्रघ्राणजिह्वाकायमनांसि ।····यदि वा मात्रादिशब्दैः पञ्चेन्द्रियाण्यभिधीयन्ते । तानि शब्दरूपरसादिभिः पञ्चकामगुणैस्तर्षयेत् । इयमेव········निरुत्तरा पूजा ।
( हे॰ त॰ टी॰, प॰ 67a )

**मालतीन्धनम्**

व्यञ्जनं मालतीन्धनम् । ( हे॰ त॰ 2.3.58 )

**मुदिता**

दिव्यसुखाविच्छेदनियमाकारां मुदिताम् । ( हे॰ त॰ टी॰, प॰ 13b )

**मुद्रा**

चक्री कुण्डल कण्ठी च हस्ते रुचक मेखला ।
पञ्चबुद्धविशुद्धया च एता मुद्रा प्रकीर्तिताः ॥ ( हे॰ त॰ 1.3.14; 8.17 )

मुद्रा पञ्चकुलानीति कथ्यते मोक्षहेतुना ।
वज्रेण मुद्र्यतेऽनेन मुद्रा तेनाभिधीयते ॥ ( हे॰ त॰ 1.4.4 )

वज्रम् अभेद्यं ज्ञानम् । तेनानेन मुद्र्यते, मुदं हर्षं महासुखं जनयते, तेन हेतुना मुद्रेत्युच्यते ।
( हे॰ त॰ टी॰, प॰ 18b )

वज्रे डोम्बी भवेन्मुद्रा पद्मे नर्ती तथैव च ।
कर्मणि रजक्याख्याता ब्राह्मणी च तथागते ॥
रत्ने चण्डालिनी ज्ञेया पञ्चमुद्रा विनिश्चिताः । ( हे॰ त॰ 1.4.6.7 )
करस्फोटो भवेन्मुद्रा अङ्गुल्यामोटनं तथा ॥ ( हे॰ त॰ 1.5.20 )

**मैत्री**

मैत्रीं सर्वसत्त्वेषु निरुत्तरसुखोपनयाकाराम् । ( हे॰ त॰ टी॰, प॰ 13a )

**योगः**

योगः समाधिः । ( हे॰ त॰ टी॰, प॰ 43a )

त्रिशरणगमनादि देवतारूपचित्तं देवतायोगः । ( हे॰ त॰ टी, प॰ 44a )

एकचित्तता सहजयोगः । ( हे॰ त॰ टी॰, प॰ 44a )

**रजः**

कृष्णरजः श्मशानाङ्गारेण, सितरजो नरास्थिचूर्णेन, पीतरजो हरितलकेन, रक्तरजः श्मशानेष्टकेन, हरितरजश्चौर्यपत्रनरास्थिचूर्णाभ्याम्। ( हे० त० 1.2.20 )

**रजकी**

रजकीति दुहिता च नर्तकी च प्रकथ्यते।
रञ्जनात् सर्वसत्त्वानां रजकीति तथा स्मृता॥ ( हे० त० 1. 5.17 )

निरुत्तरसुखेन रञ्जनाद् रजकी। ( हे० त० टी०, प० 20a )

**रत्नेशः**

रत्नेशः सर्वबुद्धरत्नानामाश्रयत्वात्। ( हे० त० टी०, प० 19b )

**वं-कारम्**

वं-कारं कुलिशं स्मृतम्। ( हे० त० टी०, प० 2a )

**वज्रम्**

आसां शुक्रं भवेद् वज्रम्। ( हे० त० 2.3.63 )

वज्रम् अभेद्यं ज्ञानम्। ( हे० त० टी०, प० 18b )

**वज्रजापः**

आलि-काल्योर्वामदक्षिणपुटनाडीभ्यो गतागतनिरीक्षणं तयोरेव गुरूपदेशतो विधारणं च जापः। स एव वज्रजापशब्देनोच्यते। ( हे० त० टी०, प० 20a-b )

**वज्रधरलक्षणम्**

ए-कारं भगमित्युक्तं वं-कारं कुलिशं स्मृता।
मयेति चालनं प्रोक्तं वज्रधरस्य लक्षणम्॥ ( हे० त० टी०, प० 2a )

**वज्रपदम्**

वज्रो हेवज्रः, तस्य पदमालीढप्रत्यालीढमण्डलसमपादार्धपर्यङ्कादिकम्।
( हे० त० टी०, प० 22a )

**वज्रसत्त्वः**

प्रज्ञोपायस्वभावयोश्चन्द्रसूर्ययोः समायोगजनितबीजोद्भवचिह्नं वज्रम्, तद्गर्भस्थितं बीजं सत्त्वम्, वज्रसहितः सत्त्वो वज्रसत्त्वः। ( हे० त० टी०, प० 45b )

**वायुः**

नासया निश्चरन् रेचको वायुः। प्रविशन् पूरकः। पूरिताभ्यन्तरः कुम्भकः। प्रविश्य निश्चलीभूतः प्रशान्तः। ( हे० त० टी०, प० 42a )

**विचित्रम्**

विचित्रं विविधं ख्यातमालिङ्गचुम्बनादिकम् । ( हे० त० 2.3.7 )
विचित्रे प्रथमानन्दः ( ( हे० त० 2.3.9 )

**विद्याष्टकम्**

जननी भगिनी चैव दुहिता भागिनेयिका ।
मातुलस्य तथा भार्या मातृभगिनी च स्वसृका ॥
पितुर्भगिनी तथा चैव अष्टौ विद्याः प्रकीर्तिताः । ( हे० त० 2.5.59 )

नैता लोकसम्बन्धिन्यः । जननीति आचार्यस्य प्रिया, सैव शिष्यस्य माता । भगिनीति तस्याः सखी । दुहितेति आचार्यस्य शिष्या । भागिनेयी तच्छिष्या । मामकस्य भार्येति मातुः प्रियसखस्य वल्लभा । मातुर्भगिनी आचार्यस्य सखी । स्वसृकेति शिष्यस्य प्रिया । पितुर्भगिनी आचार्यस्य भगिनी । ( हे० त० टी०, प० 65a )

अशुद्धचित्तशोधनाद् भगिनी भवेच्चक्षुः ।
भगिनेयी श्रोत्रमेव च जननी भण्यते घ्राणम् ॥
रसना दुहिता मनो भवेद् भार्या ।
षडेता वरा विद्या महामुद्राप्रदायिकाः ॥ ( हे० त० टी०, प० 67 a-b )

**विपाकः**

विपाकं तद्विपर्यासं सुखज्ञानस्य भुञ्जनम् । ( हे० त० 2.3 7 )
परमानन्दो विपाकजे ( हे० त० 2.3.9 )

**विमर्दः**

विमर्दमालोचनं प्रोक्तं सुखं भुक्तं मयेति च । ( हे० त० 2.3.8 )
विरमानन्दे विमर्दं च । ( हे० त० 2.3.9 )

**विलक्षणः**

विलक्षणं त्रिभ्योऽन्यत्र रागारागविवर्जितम् । ( हे० त० 2.3.8 )
सहजानन्दो विलक्षणे । ( हे० त० 2.3.9 )

**विशुद्धिः**

यथा सर्वे भावा निर्दोषा भवन्ति सा विशुद्धिः । ( हे० त० टी०, प० 35a )

**वेमचित्री**

वेमचित्री असुराधिपतिः । ( हे० त० टी०, प० 64a )

**वैभाष्यम् (वैभाषिकः)**

विरागाय भाषा विभाषा, सैव वैभाष्यम्। तच्च श्रावकयानम्, अवदानशतकत्रिदण्डकमालादिकम्। ( हे० त० टी०, प० 67b )

**वैरोचनः**

बोलकक्कोलयोगेन स्पर्शात् काठिन्यवासना।
कठिनस्य मोहधर्मत्वान्मोहो वैरोचनो मतः॥ ( हे० त० 2.2.53 )

वैरोचनः, प्रभास्वरमयत्वात्। ( हे० त० टी०, प० 19a )

**शमथः**

अनन्यचित्तो हि नाम शमथलक्षणो भावनाविशेषः। स च क्रमादभ्यासलभ्यः।
( हे० त० टी०, प० 43b )

**शुद्धः**

शुद्धः परिनिष्पन्नः। ( हे० त० टी०, प० 54a )

**शून्यताबोधिः**

सर्वभावान् मनसावलम्ब्य चित्तमात्रमेवेदमसति बाह्याकारे विषयाकारं भ्रान्त्या प्रतिभासते। तद्यथा स्वप्न इति। तदपि प्रतिभासस्वरूपं चित्तमेकानेकस्वभावरहितं निराभासं प्रभास्वरमयं पश्येत् ( इत्येषा शून्यताबोधिः )। ( हे० त० टी०, प० 13b )

**श्मशानम्**

श्वसतीत्यनया युक्त्या श्मशानेत्यभिधीयते। ( हे० त० 1.3.16 )

शवानां वसतिरिति नैरुक्तो वर्णलोपः। शवानामावास इत्यर्थः।............कथं देहः श्मशानम्—श्वसतीत्यनया युक्त्या श्मशानेत्यधीयते। ( हे० त० टी०, प० 15b )

**श्रायः**

शवः श्रायः। ( हे० त० 2.3.56 )

**षोडश शून्यता**

अध्यात्मशून्यता, बहिर्धाशून्यता, अध्यात्मबहिर्धाशून्यता, महाशून्यता, शून्यताशून्यता, परमार्थशून्यता, संस्कारशून्यता, असंस्कारशून्यता, अत्यन्तशून्यता, अनवराग्रशून्यता, अनवकारशून्यता, स्वलक्षणशून्यता, प्रकृतिशून्यता, सर्वधर्मशून्यता, अभावशून्यता, अभावस्वभावशून्यता। ( हे० त० टी०, प० 36a )

**समयसंवरे**

समयं भक्षयेत् तत्र प्रदीप्यन्तं समाहितः।
नादिं गादिं तथा हादिमन्तश्वमादिश्वं च वा॥ ( हे॰ त॰ 1.11.8 )

यदेव करोति तदेवास्य समयः। यदेव न करोति स एवास्य संवरः। (हे॰ त॰ टी॰, प॰ 23a)
समयस्य गोकुदहनादेः ( हे॰ त॰ टी॰, प॰ 67a )

**समरसम्**

समं तुल्यमिति प्रोक्तं तस्य चक्रो रसः स्मृतः।
समरसं त्वेकभावमेतेनार्थेन भण्यते॥
( हे॰ त॰ 1.8.40; स॰ सि॰ 2.4 )

**सहजम्**

द्वैविध्यं सहजं ततः। ( हे॰ त॰ 1.8.27; स॰ सि॰ 1.5 )

सहजं चतुर्विधं यस्मादुत्पन्नक्रमपक्षतः।
( हे॰ त॰ 1.8.30; स॰ सि॰ 1.8 )

सहजमेभिर्विवर्जितम् ( हे॰ त॰ 1.8.34 )
नान्येन कथ्यते सहजं न कस्मिन्नपि लभ्यते।
आत्मना ज्ञायते पुण्याद् गुरुपर्वोपसेवया॥
( हे॰ त॰ 1.8.86; स॰ सि॰ 1.15 )

सहजं संसारनिर्वाणयोर्दोषकलङ्कानङ्कितं स्वभावम्। (हे॰ त॰ टी॰, प॰ 31b)
सहज इति सहजानन्दः सम्बोधिः। (हे॰ त॰ टी॰, प॰ 39a)
सहज इति सहजाभिषेकः, सहश्चतुर्थ इत्यर्थः। (हे॰ त॰ टी॰, प॰ 39a)
आध्यात्मिकप्रज्ञोपायाभ्यां सहजाभ्यां यदुत्पन्नमनास्रवलक्षणं तत्सहजं परमार्थशब्देनोच्यते।
(हे॰ त॰ टी॰, प॰ 41a)

अनुत्पादलक्षणा शून्यता, सैव परमा प्रज्ञा। ताभ्यामभिन्नं प्रभास्वरलक्षणं पारमार्थिक-सम्बोधिचित्तशब्देन कथितम्। (हे॰ त॰ टी॰, प॰ 41b)
धर्माणां प्रकृतिः सहज इति पर्यायः। (हे॰ त॰ टी, प॰ 47b)

न रागो न विरागश्च मध्यमं नोपलभ्यते।
त्रयाणां वर्जनादेव सहजं बोधिरुच्यते॥ (हे॰ त॰ 1.10.17)
निस्तरङ्गसहजाख्यविचित्रम्। (हे॰ त॰ 1.10.34)
निस्तरङ्गस्वरूपात्मा सर्वे देहे व्यवस्थितः।...

सहजात्यां स्वरूपात्मा सहजं तत् प्रकीर्तितम् ।
स्वभावं सहजं प्रोक्तं सर्वाधारैकसंवरम् ॥ (हे० त० 1.10.41)
तस्मात् सहजं जगत्सर्वं सहजं स्वरूपमुच्यते । (हे० त० 2.2.4)

**सालिजम्**

महामांसं सालिजं प्रोक्तम् (हे० त० 2.3.60)

**सिह्लकम्**

स्वयम्भुः सिह्लकं ज्ञेयम् (हे० त० 2.3.59) ।

**सुखम्**

सुखं कृष्णं सुखं पीतं सुखं रक्तं सुखं सितम् ।
सुखं श्यामं सुखं नीलं सुखं कृत्स्नं चराचरम् ॥
सुखं प्रज्ञा सुखोपायः सुखं कुन्दुरुजं तथा ।
सुखं भावः सुखाभावो वज्रसत्त्वः सुखः स्मृतः ॥
(हे० त० 2.2.82-33)

**सुखावती**

अमिताभस्य तथागतस्य बुद्धक्षेत्रं सुखावतीत्युच्यते । इह तु नैरात्म्यादोनां भगानि सुखावती संक्षेपाणि, निरुत्तरसुखस्य रक्षणात् । (हे० त० टी०, प० 46b)

विहरेऽहं सुखावत्यां सद्वज्रयो षितो भगे ।
एकाराकृतिरूपे तु बुद्धरत्नकरण्डके ॥ (हे० त० 2.2.38)
योषिद्भगे सुखावत्याम् । (हे० त० 2.2.41)
स्त्रीकक्कोलसुखावत्यामेवंकारस्वरूपके ।
सुखस्य रक्षणादेव सुखावतीति शब्दितम् । (हे० त० 2.4.30-31)

**सूत्रान्तम् ( सौत्रान्तिकः )**

सूत्रान्तमिति । अनभिगम्भीराणि सूत्राणि सूत्रान्तानि एकगाथा-चतुर्गाथा-उपधारिणी-षण्मुखी-भद्रचर्या-ललितविस्तर-दशभूमिकादीन(नि) । (हे० त० टी०, प० 67b-68a)

**सेकः**

संवरः सेकः । ....तथा च वक्ष्यति —

सेकं चतुर्विधं ख्यातं सत्त्वानां हितहेतवे ।
सिच्यते स्नाप्यतेऽनेन सेकस्तेनाभिधीयते ॥ (2.3.12)
(हे० त० टी०, प० 7a)

**हेरुकम्**

शून्याशून्यं तु हेरुकम् । (हे० त० 2.5.70)

शून्याशून्यं प्रज्ञोपाययोरेकरसरूपत्वात् । एतदेव ज्ञानं हेरुकशब्दवाच्यम्, शून्यताकरुणयोरद्वयरूपत्वात् । (हे० त० टी०, प० 66a-b)

**हेवज्रम्**

हेकारमिति महाकरुणाम्, वज्रं सर्वधर्मशून्यताम् । (हे० त० टी०, प० 60b)

# बौद्ध तन्त्रों में देवताओं के स्वरूप (२)

—जनार्दन पाण्डेय—

['धीः' के अङ्क 4 में 'बौद्ध तन्त्रों में देवताओं के स्वरूप' शीर्षक से 16 ताराओं के स्वरूपों का निदर्शन किया गया था। प्रस्तुत अङ्क में वज्र शब्द से संपृक्त 13 देवताओं के स्वरूप साधनमाला और गुह्यसमय-साधनसंग्रह के आधार पर दिये जा रहे हैं।]

## 17. वज्रगान्धारी

वज्रगान्धारी कृष्णा षण्मुखी द्वादशभुजा ऊर्ध्वपिङ्गलकेशी प्रत्यालीढपदा दंष्ट्राकरालवदना प्रतिमुखं त्रिनेत्रा दक्षिणषड्भुजेषु यथाक्रमं वज्र-वज्रघण्टा-खड्ग-त्रिशूल-बाण-चक्राणि वामषड्-भुजेषु खट्वाङ्गाङ्कुशधनुःपरशुपाशहृत्तर्जन्यः। प्रथममुखं कृष्णम् अपराणि मुखानि पञ्चवर्णानि। विश्वपद्मसूर्यासना इति। ( साधनमाला, पृ० 403-404 )

## 18. वज्रचर्चिका

वज्रचर्चिकां त्रिनेत्रामेकमुखोमर्द्धपर्यङ्कताण्डवां मृतकासनां कृशाङ्गीं दंष्ट्रोत्कटभैरवां नरशिरो-मालाविभूषितकण्ठदेशाम् अस्थ्याभरणविभूषितां पञ्चमुद्राधारिणीमक्षोभ्यमुकुटिनीं व्याघ्रचर्मनिवसनां मुक्तकेशीं षड्भुजां दक्षिणे वज्रखड्गचक्रधारिणीं वामे कपालमणिकमलधरां रक्तवर्णां कर्मानुरूपतः शुक्लादिवर्णयुक्तां च ध्यात्वा। ( सा० मा०, पृ० 395 )

## 19. वज्रतीक्ष्णभट्टारक

वज्रतीक्ष्णं कनकवर्णं सर्वालङ्कारभूषितं दक्षिणे करे खड्गं वामे करे प्रज्ञापारमितापुस्तकं द्वीन्द्रियसमापत्त्या भावयेत्। ( सा० मा०, पृ० 148 )

## 20. वज्रधर्म

तं सितं रक्तवर्णं तु पद्मरागसमद्युतिम्।
पञ्चबुद्धमुकुटधरं हर्षेणोत्फुल्ललोचनम्॥
नामतो स्पर्धया नालं धृत्वा षोडशपत्रकम्।
पद्मं विकासयन्तं च हृदि दक्षिणपाणिना॥

मयूरोपरि मध्यस्थे निषण्णं चन्द्रमण्डले ।
सत्त्वपर्यङ्कमाभुज्य सश्रृङ्गाररसोत्सवम् ॥
चैत्यान्तस्थमहाकर्म कूटागारविहारिणम् ।
भावयेद् वज्रधर्माग्रयम् .... .... .... .... ॥ ( सा० मा०, पृ० 33 )

## 21. वज्रधात्वीश्वरी (मारीची)

ॐकारेण निष्पन्नां वज्रधात्वीश्वरीं मारीचीं द्वादशभुजां रक्तां षण्मुखीं लम्बोदरां ज्वलत्पिङ्गलोर्ध्वकेशां कपालमालिनीं सर्पमण्डितमेखलां व्याघ्रचर्माम्बरधरां चरणयुगनिपतितानेकविघ्नसन्ततिं चैत्यगर्भसूर्यमण्डले प्रत्यालीढस्थितां वैरोचनासनस्थां नानावराहाकृष्यमाणरथां रक्तकृष्णहरितपीतसितप्रथमादिमुखीम् ऊर्ध्वकृष्णवराहैकमुखीं दक्षिणे खड्गमुशलशराङ्कुशैकसूचिकवज्रपरशून् वामे सपाशतर्जनीकपालाशोकपल्लवब्रह्मशिरश्चापत्रिशूलानि धारयन्तीं त्रिनेत्रां ललज्जिह्वां करालवदनामतिभयङ्कराकारां चिन्तयेत् । ( सा० मा०, पृ० 280 )

## 22. वज्रयोगिनी

1. भट्टारिकां वज्रयोगिनीं तत्र स्थितह्रींकारपरिणतां पीतवर्णां स्वयमेव स्वकर्तिकर्तितस्वमस्तकवामहस्तस्थितां दक्षिणहस्तकर्त्रिसहिताम् ऊर्ध्वविस्तृतवामबाहुम् अधोनमितदक्षिणबाहुं वासःशून्यां प्रसारितदक्षिणपादां संकुचितवामपादां भावयेत् । कबन्धान्निःसृत्यासृग्धारा स्वमुखे प्रविशति । उभयोः पार्श्वयोगिन्योर्मुखे प्रविशति । वामदक्षिणपार्श्वयोः श्यामवर्णवज्रवर्णिनीपीतवर्णवज्रवैरोचन्यौ वामदक्षिणहस्तकर्त्रिसहिते दक्षिणवामहस्तकर्परसहिते प्रसारितवामपादे संकुचितेतरपादे मुक्तकेश्यौ भावयेत् । ( सा० मा०, पृ० 453 )

2. भगवतीं वज्रयोगिनीं मुक्तकेशाम् उग्रकिरणां नग्नां प्रत्यालीढपदस्थितां द्विभुजां पीनोन्नतपयोधरां रक्तवर्णां चलत्प्रचण्डवर्तुलत्रिनयनां सभ्रूभङ्गभृकुटिनीं दंष्ट्राकराललल्लद्रसनाम् उग्रशवारूढां नवयौवनां हारार्धहारकिङ्किणीज्वालावनद्धनितम्बां विचित्ररत्नालङ्कृतनूपुरधरां षण्मुद्रोपेतां वामे खट्वाङ्गकरोटधरां दक्षिणे वज्रधराम् अतिभीमरूपिणीं श्मशानादौ भावयेत् । (सा० मा०, पृ० 454)

3. महारागस्वभावां ऊर्ध्वज्वलितरक्तकेशां हारार्धहारकिङ्किणीशब्दघुर्घुररवविचित्रां रत्नालङ्कृतनूपुररवां पञ्चमुद्रोपेतां वामे कपालं देवासुररुधिरपूरितं दक्षिणकरे कर्त्रितर्जनीधराम्, इत्यधिकं पूर्वतः । ( सा० मा०, पृ० 457 )

4. तन्मध्यादुत्थिता देवी वाराही वज्रयोगिनी ।
द्वादशभुजा चतुर्वक्त्रा त्रिनेत्रा मदनोत्कटा ॥
भद्रपर्यङ्कमासीना नृत्यमाना सुशोभना ।
दिव्या सा मुक्तकेशी च अर्धनारीश्वरी मुखी ॥

सितरक्तरूपधरा विश्ववज्रा............... ।
वज्रघण्टाकरव्यग्रा कमलावर्तवर्तिनी ॥
ललाटे ज्वालामुद्रा तु नरचर्मपटावृता ।
करैः कपालखट्वाङ्गपाशाङ्कुशक्रपीटकम् ॥
दधती कर्त्रिकां ब्रह्ममुण्डं मणिं तथा ।
नीलं पीतं च हरितं दिव्यं चैव चतुर्मुखम् ॥
दंष्ट्रोग्रस्थारुणा चैव कपालमुकुटोज्ज्वला ।
षण्मुद्रामुद्रिता देवी खण्डमण्डितमेखला ॥
केयूरनूपुराभ्यां च यथास्थानं विभूषिता ।
ललाटे वज्रमालास्याः पूर्वपत्रे तु डाकिनी ॥
श्रीपर्णी सिंहवक्त्रान्या वामे लामकिरानना ।
पृष्ठे गजमुखी देवी खण्डरोहा च रौद्रिणी ॥
दक्षिणे रूपिणी देवी अश्ववक्त्रा सुरूपिणी ।
त्रिनेत्रा विश्वरूपिण्यश्चतस्रोऽपि हि योषितः ॥
नृकरोटश्च खट्वाङ्गं दधत्यो मुण्डकभृतम् ।
मुक्तकेश्यस्तथा नग्ना नृत्यमाना सुशोभना ॥
प्रेतपृष्ठेऽर्धपर्यङ्के विकटोत्कटभीषणा ।
भैरवः कालरात्रिश्च देव्याः पादतले कृतौ ॥
आग्नेयादिचतुष्कोणे बोधिचित्तादिभाजनम् ।
( गुह्यसमयसाधनसंग्रह, पत्र 24-25 )

5. ॐकारपरिणामेन भगवतीं वज्रयोगिनीं शुक्लामुदग्रकिरणाम् ऊर्ध्वपादस्थितां शक्रब्रह्माक्रान्ताम् अधःपादेन भैरवकालरात्री द्विभुजामेकाननां मुक्तकेशीं नग्नां निराभरणां पीनोन्नतपयोधरां रक्तवर्तुलवर्तुलां प्रचण्डनयनां भ्रूभङ्गभृकुटीदंष्ट्राकरालवदनां वामे खट्वाङ्गकरोटधरां दक्षिणे वज्रकर्ति अतिभीषणरूपां भावयेत् । ( गु० स० सा० सं०, पत्र 72 )

## 23. वज्रवाराही

1. दर्शारसिन्दूरवर्णां ह्रीःकारमनुपमं रूपं तत्परिणामा वज्रवाराही द्विभुजैकमुखं जवाकुसुमसदृशमालीढपदा त्रिभुवनदुःखच्छेदोद्यता वामबाहुस्तनमण्डलहृदयसंभवमीलिता दक्षिणाङ्घ्रिचर्चिता रक्ता दक्षिणशिरःपतिता वामपादाक्रान्तं भैरवं चतुर्भुजमधोहृदयोर्ध्वमुखं भट्टारिकां निरीक्षन्तं कर्तिकपालधरं प्रथमभुजद्वयं व्याघ्रचर्मपरिधानम् अपरभुजाभ्यां डमरुत्रिशूलधरं त्रिनेत्रं विकरालास्यं नील-

पिङ्गलकेशं सितकपालमुण्डमण्डितं वज्रवाराहीं त्रिनेत्रां दक्षिणे एकशूकवज्रं वामे पद्मभाजनं सितवर्णम् असृक्पूर्णं दृष्टकपालस्थं आलिकालिमुण्डमालां पञ्चमुद्रामुद्रितां दिगम्बरां मुक्तकेशां हृष्टां मुण्डपयोधरां षोडशवर्षाकारां हसन्तीं विकसितवदनां त्रिभुवनरश्मिस्फुरितां कल्पानलसदृशां भावयेत् ।

( लूयीपाद—गु० स० सा० सं०, पत्र 5-6 )

2. दाडिमीकुसुमप्रख्यां द्विभुजां दक्षिणेन वज्रतर्जनिकाकारां वामेन करोटखट्वाङ्गधराम् एकाननां त्रिनेत्रां मुक्तकेशां षण्मुद्रामुद्रितां दिगम्बरां पञ्चज्ञानात्मिकां सहजानन्दसाधनां प्रत्यालीढपदाक्रान्तभैरवकालरात्रिकां सार्द्रमुण्डमालालङ्कृतगात्रां स्रवद्रुधिरं पिबन्तीं भोजयन्तीं भावयेत् ।

तथा पूर्वादिचतुर्दलेषु यथाक्रमं वामावर्तेन डाकिनी-लामा-खण्डरोहा-रूपिण्यः कृष्णश्यामरक्तगौरा एकवक्त्राश्चतुर्भुजा वामे कपालखट्वाङ्गहस्ता दक्षिणे डमरुकर्तिकास्त्रिनेत्रा मुक्तकेशा नग्ना आलीढासनस्थाः पञ्चमुद्राविभूषिता भावयेत् ।

( अद्वयवज्रपाद—गु० स० सा० सं०, पत्र 8,87; सा० मा०, पृ० 424 )

3. ह्रीःकारजपत्रशुकवज्रेण निष्पन्नां वज्रवाराहीं शुक्लरक्तत्रिनेत्रां दंष्ट्राकरालवदनां मुक्तकेशां वज्रावलिद्वयमध्ये कृतकपालमालाधरां पञ्चमुद्रामुद्रितां दक्षिणकरस्थितवज्रां वामे खट्वाङ्गं धारयन्तीम् आलीढपदस्थां नग्नां देवासुरमनुष्याभयदां ह्रींकाराधिष्ठितहृदयां वज्रवाराहीमात्मानं भावयेत् । ( गु० स० सा० सं०, पत्र 103 )

4. वंकारबीजसंभवतद्बीजसमुद्भववज्रतद्बीजचिह्नसमुद्भवां भगवतीं वज्रवाराहीं प्रलयानलसन्निभां द्विभुजैकवक्त्रां दक्षिणे दुष्टतर्जनवज्रैकां वामे कपालखट्वाङ्गधरां भैरवकालरात्र्याक्रान्तामालीढासनां ताण्डवीं दिगम्बरां मुक्तकेशां खण्डमण्डितमेखलां दंष्ट्राकरालवदनां त्रिनेत्रां विश्ववज्राक्रान्तमौलिनीं वज्रभालकपालमूर्धजां मुण्डस्रग्दामदेहोपशोभां षण्मुद्राभिरलङ्कृतां सर्वालङ्कारभूषितां सर्वबुद्धाभिषिक्तां""एवंभूतां भगवतीं वज्रवाराहीम् । ( विलासवज्रपाद—गु० स० सा० सं०, पत्र 85 )

5. दाडिमकुसुमसदृशीम् एकाननां त्रिनेत्रां मुक्तकेशीं षड्भुजां दिगम्बरां कृशोदरीं खण्डमण्डितमेखलां पञ्चबुद्धमुकुटिनीमार्द्रमुण्डमालालङ्कृतां षण्मुद्रामुद्रितां हारनूपुरघुर्घुरालङ्कृतां देदीप्यमानवडवानलसदृशीं वज्रवाराहीं विभावयेत् । (गु० स० सा० सं०, पत्र 68 )

6. वश्यविधौ मुक्तकेशी वज्रवाराही नाभिदेशे कर्त्रिकपालधारिणी नृत्यन्ती चिन्त्या ।

( सा० मा०, पृ० 433 )

7. वज्रवाराहीं रक्तवर्णां चतुर्दलेषु पञ्चामृतभृतपद्मभाजनं ध्यात्वा प्रेतासनस्थामालीढपदां नग्नाम् ऊर्ध्वकेशां कपालमुकुटां पञ्चमुद्रोपेतां चतुर्भुजां दक्षिणे वज्रपाशाङ्कुशधरां वामे कपालखट्वाङ्गतर्जनीपाशधराम् एकमुखीं त्रिनेत्रां भृकुटीकरालवदनां वज्रघोणां सुभीषणां बृहदुदरां ललज्जिह्वां भावयेत् । ( सा० मा०, पृ० 438 )

8. एतत्परिणतां वज्रवाराहीं रक्तां त्रिनेत्रां मुक्तकेशां नग्नां खण्डमण्डितमेखलां शतार्धसार्द्र-नरशिरोमालाप्रलम्बितां वामभुजे कपालं दुष्टमाराद्यसृग्धरं दक्षिणे

तर्जयन्तीं दिशः सर्वं दुष्टतर्जनिवज्रिकम् ।
कल्पवह्निमहातेजां स्रवन्तीं रुधिरप्रियाम् ॥

ऊर्ध्वपादस्थितां भावयेत् । (सा० मा०, पृ० 439)

9. तत्र वज्रवाराही त्रिमुखी षड्भुजा रक्तनीलहरितमुखी वामे कपालखट्वाङ्गपाशं दक्षिणे अङ्कुशब्रह्ममुण्डकर्तिबिभ्राणा योगिनी मोहिनी संचारिणी संत्राशिनी चण्डिका नीलसितपीतहरित-धूम्रधूसरवर्णा चतुर्भुजा सकपालखट्वाङ्गघण्टा च वामे डमरुकर्तिके च दक्षिणे दधाना सर्वाश्च मुक्तकेश्यो नग्नास्त्रिनेत्रा आलीढासनसंस्थिता द्रष्टव्याः । ( गु० स० सा० सं०, पत्र 17 )

## 24. वज्रवीणा सरस्वती

तदुद्भवां सरस्वतीं वीणावादनतत्पराम् ।
चन्द्रावदातनिर्भासां सर्वालङ्कारभूषिताम् ॥
निष्पाद्य तां महादेवीं चिन्तयेद् हृदि संस्थिताम् ॥ ( सा० मा०, पृ० 335 )

## 25. वज्रशारदा

शुम्भ्राबुजोपरि लसत्तनुमादधानां
नेत्रत्रयं मुकुटसंस्थितमर्धचन्द्रम् ।
वामेन पुस्तकधराम्बुजमन्यहस्ते
पश्चात् स्वदेहसमतामनयत् प्रयत्नात् ॥ (सा० मा०, पृ० 337)

## 26. वज्रशृङ्खला

वज्रशृङ्खलां त्रिमुखां षड्भुजां नीलशुक्लदक्षिणेतरमुखीं त्रिनेत्रां वज्रशृङ्खलशरवद्दक्षिणकर-त्रयां तर्जनीपाशचापवद्वामकरत्रयां हरितश्यामवर्णाम् ईषद्धसितमुखीं सर्वालङ्कारां दुष्टसत्त्वनिषूदिनीं ध्यात्वा । ( सा० मा०, पृ० 413 )

## 27. वज्रसरस्वती

1. शून्योद्भूतसरोजचन्द्रनिहितं दोकाररक्तं पुनः
नानारश्मिसमूहसुन्दरतरं तेनाष्टपत्राङ्कजम् ।
तस्माद्रक्तमहाद्युतिं भगवतीं सद्भूषणालङ्कृताम्
प्रत्यालीढपदस्थितां त्रिवदनां षड्बाहुभिर्भूषिताम् ॥

सव्ये नीलमुखां बिभर्ति च करे पद्मासिकर्त्रीश्च वै
वामे शुक्लमुखां च पात्रसहितां सद्रत्नचक्रं तथा।
हृत्पद्मस्थितचन्द्रमध्यनिहितं तस्याश्च दोर्भास्वरे
नानाज्ञानतमोपहैश्च किरणैरापूर्यमाणं जगत्॥

( श्रीधरपाद—सा० मा०, पृ० 327 )

2. तेन च भगवतीं महासरस्वतीमनुचिन्तयेत्। शरदिन्दुकराकारां सितकमलोपरि चन्द्रमण्डलस्थां दक्षिणकरेण वरदां वामेन सितनालसितसरोजधरां स्मेरमुखीमतिकरुणामयीं श्वेतचन्दनकुसुमवसनधरां मुक्ताहारोपशोभितहृदयां नानारत्नालङ्कारवतीं मुदितकुचमुकुलदन्तुरोरस्तटीं स्फुरदनन्तगभस्तिव्यूहाभासितलोकत्रयाम्।

ततस्तत्पुरतो भगवतीं प्रज्ञां दक्षिणतो मेधां पश्चिमतो मतिं वामतः स्मृतिम्, एताः स्वनायिकासमानवर्णादिकाः सम्मुखमवस्थिताश्चिन्त्याः। ( सा० मा०, पृ० 329 )

3. ततः किरणसन्दर्भे बीजगर्भे निवेशिनीम्।
सर्वाशावदनोद्भासिसितांशुपटलोज्ज्वलाम्॥
पद्मचन्द्रसमासीनां वज्रपर्यङ्कशालिनीम्।
अर्धचर्चरभृङ्गाङ्गश्रीसत्केशैरलङ्कृताम्॥
उन्निद्रारुणराजीवराजत्सव्यकरश्रियाम्।
चित्रनेपथ्यसौभाग्यां लक्ष्मीख्याताङ्गसम्पदम्॥
प्रज्ञापारमितां भास्वद्वामपाणिसरोरुहाम्।
द्विरष्टवत्सराकारां सितवर्णाम्बरामथ॥
चन्द्रबीजादिनिष्पन्नां पश्येदार्यसरस्वतीम्।

( भिक्षुमनोरथरक्षितस्य—सा० मा०, पृ० 332 )

## 28. वज्रानङ्गभट्टारक

पीतवर्णमेकमुखं त्रिनेत्रं षड्भुजं जटाधरं द्विरष्टवर्षं सशृङ्गारं प्रत्यालीढपदं खड्गबाणदर्पणधरं दक्षिणकरत्रयं कार्मुककुवलयकंकेलिधारिवामकरत्रयं दिव्याभरणवसनभूषितमक्षोभ्यमुकुटिनं ध्यात्वा। ········अथवा चतुर्भुजं दर्पणाशोकपल्लवधरं द्विभुजरहितं ध्यायात्। ( सा० मा०, पृ० 123–124 )

## 29. वज्रासनभट्टारक

द्विभुजैकमुखं पीतं चतुर्मारसंघटितमहासिंहासनवरं तदुपरि विश्वपद्मवज्रे वज्रपर्यङ्कसंस्थितं वामोत्सङ्गस्थितवामकरं भूस्पर्शमुद्रादक्षिणकरं बन्धूकरागारुणवस्त्रावगुण्ठिततनुं सर्वाङ्गप्रत्यङ्गसेचनकविग्रहं विचिन्त्य तस्य भगवतो दक्षिणे मैत्रेयं बोधिसत्त्वं गौरं द्विभुजं जटामुकुटिनं सव्यकरेण चामरधारिणं अपसव्येन नागकेशरपुष्पच्छटाधारिणं तथा वामतो लोकेश्वरं शुक्लं दक्षिणेन चामरधरं वामकरेण कमलधरं भगवन्मुखावलोकनपरौ तौ भावयेत्। ( सा० मा०, पृ० 24 )

———

# बौद्ध तन्त्र साहित्य का वर्गीकरण

—बनारसी लाल—

[ बौद्ध तन्त्रों को मुख्यतः क्रिया, चर्या, योग और अनुत्तर नामक चार विभागों में बाँटा गया है। क्रिया तन्त्र छः कुलों में और इनमें से प्रत्येक कुल भी उपकुल में विभक्त हैं। चर्या तन्त्रों के तीन कुल हैं और योग तन्त्र एवं अनुत्तर तन्त्र भी तीन-तीन भागों में विभक्त हैं। अनुत्तर तन्त्रों के इन विभागों के कुलानुसारी छः उपविभाग भी हैं। प्रस्तुत निबन्ध में इन सबका परिचय देने के साथ प्रत्येक विभाग और उपविभाग में कौन-कौन से तन्त्र हैं, उनकी प्रमाणिक नामावली प्रस्तुत की गई है। ]

भारतीय वाङ्मय में तन्त्र-साहित्य का महत्त्वपूर्ण स्थान है। भारतवर्ष की इस भूमि में शताब्दियों से ज्ञान-विज्ञान की अनेक शाखा-प्रशाखाओं का विकास हुआ है, उनमें तन्त्र विद्या भी एक है। इस साहित्य का अध्ययन यद्यपि उतना अधिक नहीं हुआ है, तथापि इस पर इधर के वर्षों में प्राच्य एवं पाश्चात्य विद्वानों का रुझान देखने में आया है।

भारतवर्ष की इस भूमि पर दो प्रकार की संस्कृतियों का विकास हुआ है—वैदिक और श्रमण। दोनों ही संस्कृतियों ने समान रूप से अपने धर्मानुकूल इसकी व्याख्या की है।

**बौद्ध तन्त्र**

बौद्ध तन्त्र का अपना विशाल साहित्य है। बौद्ध दर्शन के ग्रन्थों की भाँति तन्त्रशास्त्र के ग्रन्थों का भी अनुवाद भोटी एवं चीनी भाषाओं में हुआ। तन्त्रशास्त्र के विशाल साहित्य की सूचना इस अनुवाद साहित्य से मिलती है। मूल संस्कृत में अब बहुत थोड़े ही ग्रन्थ उपलब्ध हैं। तन्त्र का विशाल साहित्य तिब्बती कन्ग्युर (बुद्ध वचन) एवं तन्ग्युर (टीका ग्रन्थ) में संगृहीत है।

प्रस्तुत निबन्ध में इस विशाल साहित्य को भोट आचार्यों की व्याख्याओं के आधार पर वर्गीकृत करने का प्रयास किया जा रहा है। भोट आचार्यों ने बौद्ध तन्त्र-ग्रन्थों पर बहुत अधिक टीका-टिप्पणियां की हैं और अपने ग्रन्थों में इस साहित्य के वर्गीकरण पर पर्याप्त प्रकाश डाला है। उनमें प्रमुख हैं—Bu sTon Rinpoche, mKhas sGrub rJe, Losang ThinLas इत्यादि Bu sTon Rinpoche कृत rGyud sDe spyihi rNam par bZag Pa rGyud sDe Rinpochehi mDses rGyan (Comp-works-vol-B) तथा Losang ThinLas कृत Thob Yig gSal bahi Meloṅ.

विदित है कि बौद्ध तन्त्रों को मुख्यतः चार वर्गों में विभाजित किया गया है। वे हैं—क्रिया-तन्त्र, चर्या-तन्त्र, योग-तन्त्र एवं अनुत्तर-योगतन्त्र। बौद्ध तन्त्र का अध्ययन अभी अपने प्रारम्भिक स्तर पर है। संस्कृत एवं हिन्दी के माध्यम से अध्ययन कर्ताओं के लिये यह काफी कठिन समस्या रहती है कि कौन सा ग्रन्थ किस तन्त्र वर्ग में संगृहीत है। अतः सुविधा की दृष्टि से इस साहित्य का वर्गीकरण नागरी अक्षरों में प्रस्तुत किया जा रहा है।

## क्रिया तन्त्र (Bya rGyuP)

क्रिया-तन्त्र मुख्य रूप से 6 भागों में विभाजित है।

(1) तथागत कुल ( De bzin gŚegs Paḥi Rigs )

(2) पद्म कुल ( Padmaḥi Rigs )

(3) वज्र कुल ( rDo rJeḥi Rigs )

(4) मणि कुल ( Norbuḥi Rigt)

(5) पञ्चक ( Lṅes rtsen Gyi Rigo )

(6) लोक कुल ( ḥJig rTen Paḥi Rigs )

### (1) तथागत कुल ( De bzin gŚegs Rigs )

तथागत कुल आठ उप भागों में विभाजित है—

(1) प्रधान कुल ( Rigs kyi gTso bo )

(2) अधिपति कुल ( Rigs kyi bDag po )

(3) मातृ कुल ( Rigs kyi Yum )

(4) उष्णीष कुल ( gTsug Tor Gyi Rigs )

(5) क्रोध कुल ( Rigs kyi Khro bo )

(6) दूत-दूती कुल ( Rigs kvi Pho Ña, Pho Ña Mo )

(7) बोधिसत्त्व कुल ( Byaṅ Chub Sems dPaḥ iRigs )

(8) शुद्धावासिक देवकुल ( gNas gTsaṅ Lha )

**(1) प्रधान कुल ( Rigs gtso bo )**

इस कुल के अन्तर्गत निम्नलिखित तन्त्र संगृहीत हैं—

1. त्रिसमयव्यूहराजनाम तन्त्र ( तोह[1]॰ 502 )
2. आर्यमहामणिविपुलविमानसुप्रतिष्ठितगुह्यपरमरहस्यकल्पराजनाम धारणी (तोह॰ 506)
3. आर्यसर्वतथागताधिष्ठानहृदयगुह्यधातुकरण्डनाम धारणी महायानसूत्र ( तोह॰ 507 )
4. बोधिगर्भालङ्कारलक्षधारणी ( तोह॰ 509 )
5. आर्यरश्मिविमलविशुद्धप्रभानाम धारणी ( तोह॰ 510 )
6. आर्यप्रतीत्यसमुत्पादहृदयविधि ( तोह॰ 519 )
7. आर्यप्रतीत्यसमुत्पादनाम महायानसूत्र ( तोह॰ 520 )
8. आर्यप्रतीत्यसमुत्पादहृदयनाम ( तोह॰ 521 )
9. आर्य अनन्तमुखसाधक नाम धारणी ( तोह॰ 525 )

1. A Complete Catalogue of the Tibetan Buddhist Canon, Sendai Japan.

10. बुद्धभगवदष्टशतनाम धारणी ( तोह० 532 )
11. आर्यद्वादशबुद्धकनाम महायानसूत्र ( तोह० 511 )
12. आर्यबुद्धहृदयनाम धारणी ( तोह० 515 )
13. आर्यबुद्धहृदयनाम धारणी धर्मपर्याय ( तोह० 514 )
14. आर्यपुष्पकूटनाम धारणी ( तोह० 516 )
15 आर्यमहामहीन्द्रनाम धारणी ( तोह० 523 )
16. आर्यचन्दनाङ्गनाम धारणी ( तोह० 518 )
17. ḥPhags Pa gDon Miza baḥi gZuṅs ( तोह० 524 )
18. ḥPhags Pa rNam par sNaṅ mDsad kyi sÑiṅ poḥi gZuṇs ( तोह० 534 )

( आर्यवैरोचनहृदय धारणी )

19. आर्यसप्तबुद्धकनाम महायानसूत्र ( तोह० 512 )
20. आर्यसर्वबुद्धाङ्गवतीनाम धारणी ( तोह० 513 )
21. आर्यविमलनाम धारणी ( तोह० 517 )
22. आर्यमहाधारणी ( तोह० 529 )
23. आर्यअग्रप्रदीप धारणी ( विद्याराज ) ( तोह० 528 )
24. आर्यसर्वधर्मगुणव्यूहराजनाम महायानसूत्र ( तोह० 527 )
25. आर्यसप्ततथागतपूर्वप्रणिधानविशेषविस्तरनाम महायानसूत्र ( तोह० 503 )
26. आर्यभगवतोभैषज्यगुरुवैडूर्यप्रभस्य पूर्वप्रणिधानविशेषविस्तारनाम महायानसूत्र ( तोह० 504 )
27. आर्यअष्टमहाभयतारणीनाम धारणी ( तोह० 541 )
28. आर्यषण्मुखनाम धारणी ( तोह० 526 )
29. आर्यस्वल्पाक्षरप्रज्ञापारमितानाम महायानसूत्र ( तोह० 530 )
30. भगवतीप्रज्ञापारमिताहृदय ( तोह० 526 )
31. आर्यज्ञानोल्कानाम धारणी सर्वगतिपरिशोधनी ( तोह० 522 )
32. पूजामेघनाम धारणी ( तोह० 538 )
33. Padmaḥi sPyan Gyi gZuṅs ( तोह० 539 )

( पुण्डरीकाक्ष धारणी )

34. सुरूपनाम धारणी ( तोह० 540 )
35. आर्यविशेषवतीनाम धारणी ( तोह० 542 )
36. आर्यसुवर्णप्रभासोत्तमविजयसूत्रेन्द्रमहायानसूत्र ( तोह० 555 )
37. आर्यसुवर्णप्रभासोत्तमसूत्रेन्द्रराजनाम महायानसूत्र ( तोह० 556 )
38. आर्यसुवर्णप्रभासोत्तमसूत्रेन्द्रराजनाम महायानसूत्र ( तोह० 557 )

2. **अधिपति कुल ( Rigskyi bDag Po )**

इस कुल के अन्तर्गत निम्नलिखित तीन तन्त्र संगृहीत हैं—

1. आर्यमञ्जुश्रीमूलतन्त्र ( तोह० 543 )
2. gTsug Tor ḥBar Baḥi gZuṅs ( तोह० 600 )
3. सिद्धैकवीरमहातन्त्रराजनाम ( तोह० 544 )

3. **मातृ कुल ( Rigskyi yum )**

निम्नलिखित तन्त्र इस कुल के अन्तर्गत संगृहीत हैं—

1. महासहस्रप्रमर्दननाम सूत्र ( तोह० 558 )
2. महामायूरी विद्याराज्ञी ( तोह० 559 )
3. आर्यमहाप्रतिसरा महाविद्याराज्ञी ( तोह० 561 )
4. महाशीतवनसूत्र ( तोह० 562 )
5. महामन्त्रानुधारीसूत्र ( तोह० 563 )
6. आर्यजयवतीनाम महाविद्याराज्ञी ( तोह० 567 )
7. आर्यमारीचीनाम धारणी ( तोह० 564 )
8. आर्यजाङ्गुलीनाम विद्या ( धारणी ) ( तोह० 571 )
9. सिद्धपठितभगवती आर्याङ्गुलीनाम विद्याराज ( तोह० 572 )
10. आर्यसर्वधर्ममातृकानाम धारणी (तोह० 573)
11. आर्यचूडामणिनाम धारणी (तोह० 574)
12. आर्यषडक्षरविद्या (तोह० 575)
13. आर्यप्रज्ञापारमिता शतसाहस्रिका धारणी (तोह० 576)
14. आर्यप्रज्ञापारमिता पञ्चविंशतिसाहस्रिका धारणी (तोह० 577)
15. आर्यप्रज्ञापारमिता अष्टसाहस्रिका प्रज्ञापारमिता धारणी (तोह० 578)
16. प्रज्ञापारमिता हृदयधारणी (तोह० 579)
17. षट्पारमिता ग्रहधारणी (तोह० 580)

18. दशपारमितालब्ध धारणी (तोह० 581)
19. mTshad Med Paḥi Thob Par ḥGyur Baḥi gZuṅs. (तोह० 582)
20. प्रज्ञापारमिता शतसाहस्रिका.......धारणी (तोह०-583)
21. ḥPhags Pa Phal Po Che gZuṅ Bar ḥGyur Paḥi gZuṅs (तोह० 584)
22. ḥPhags Pa sDoṅ Po bKod Paḥi sṄiṅ Po (तोह० 585)
23. ḥPhags Pa Tiṅ Ṅe ḥZin mDo gZuṅ Par ḥGyur Paḥi gZuṅs (तोह० 586)
24. ḥPhags Pa So Sor ḥBraṅ Ma Chen Mo gZuṅ Bar ḥGyur Baḥi gZuṅs (तोह०-588)
25. ḥPhags Pa Laṅ Kar gŚegs Paḥi mDo Thams Cad bKlags Par ḥGyur Baḥi gZuṅs sṆags. (तोह० 589)

4. **उष्णीष कुल** (Tsug Gyi Rgs Tor)

1. आर्यसर्वतथागतसितातपत्रा नाम अपराजिता प्रत्यङ्गिरामहाविद्याराज्ञी (तोह०-590)
2. आर्यसर्वतथागतोष्णीष सितातपत्रापराजिता महाप्रत्यङ्गिरा परमसिद्धनाम धारणी (तोह०-591)
3. आर्य तथागतोष्णीष सितातपत्रापराजितानाम धारणी (तोह० 592)
4. सर्वतथागतोष्णीष विजय नाम धारणी (तोह० 594)
5. आर्य उष्णीषसितातपत्रा नाम अपराजिता धारणी (593)
6. आर्यसर्वदुर्गतिपरिशोधनी उष्णीषविजय नाम धारणी (तोह० 597)
7. सर्वतथागतोष्णीष विजयनाम धारणी कल्पसहिता (तोह० 595)
8. सर्वतथागतोष्णीष विजयनाम धारणी कल्पसहिता (तोह० 596)
9. समन्तमुखप्रवेशरश्मिविमलोष्णीष प्रभास सर्वतथागतहृदय समयविलोकितनाम धारणी (तोह० 599)
10. सर्वप्रज्ञान्तपारमिता सिद्धचैत्यनाम धारणी (तोह० 601)
11. करुणाग्रनाम धारणी (तोह० 603)
12. mChod rTen gCig bTab Na Bye Ba bTab Par ḥGyur baḥi gZuṅs. (तोह० 602)

5. **क्रोध कुल** (Rigs kyi Khro bo)

1. क्रोधविजयकल्पगुह्यतन्त्र (तोह० 604)
2. आर्यवज्रभैरवधारणी नाम (तोह० 605)

3. आर्यमहादण्डनाम धारणी (तोह॰ 606)
4. आर्यरत्नमाला नाम अपराजिता (तोह॰ 607)
5. आर्य सर्वान्तरायिक विशोधनीनाम धारणी (तोह॰ 608)
6. आर्य द्रविडविद्याराज (तोह॰ 610)
7. आर्य चुण्डीदेवीनाम धारिणी (तोह॰ 613)

6. **दूतदूती कुल** Rigs (Pho Ña, Pho kyi Mo)

1. आर्यसुमुखनाम धारणी (तोह॰ 614)
2. बहुपुत्रप्रतिसरणनाम धारणी (तोह॰ 615)
3. आर्यसप्तवेताडकनाम धारणी (तोह॰ 616)
4. आर्यभद्ररात्रिनामसूत्र (तोह॰ 617)
5. आर्य ओजप्रत्यञ्जन सूत्र (तोह॰ 618)
6. आर्यचक्षुर्विशोधनीनाम विद्यामन्त्र (तोह॰ 619)
7. आर्यअक्षिरोगप्रशमनी सूत्र (तोह॰-620)
8. आर्य अर्शप्रशमनी सूत्र (तोह॰-621)
9. आर्यसर्वरोगप्रशमनीनाम धारणी (तोह॰-622)
10. Rims Nad bZi baḥi gZuṅs (तोह॰-624)
(ज्वररोगप्रशमनी धारणी)
11. आर्यज्वरप्रशमनी नाम धारणी (तोह॰ 625)
12. ḥBrum Buḥi Nad Zi Bar Byed Paḥi gZuṅs (तोह॰-626)
13. Mdaṅs Phyir Mi-ḥPhrog-Pa shes-bya-ba (तोह॰ 627)
14. आर्यवैशालीप्रवेशमहासूत्र (तोह॰ 628)
15. आर्यचोरविध्वंसननाम धारणी (तोह॰ 629)
16. आर्यसर्वान्तरायिक संग्रहधारणी मन्त्र (तोह॰ 630)
17. आर्य अचलनाम धारणी (तोह॰ 631)
18. आर्यवज्रक्रोधराजकल्पलघुतन्त्रनाम (तोह॰ 632)
19. आर्यकाञ्चनवतीनाम धारणी (तोह॰ 633)

7. **बोधिसत्त्व कुल** ( Byaṅ Chub Sems pa bi Rigs )

1. आर्यमैत्रेय नाम अष्टोत्तरशतक धारणीमन्त्रसहिता (तोह॰ 635)
2. आर्य-अवलोकितेश्वराष्टोत्तरशतक नाम धारणी मन्त्रसहिता (तोह॰ 634)
3. आर्यखगर्भाष्टोत्तरशतकनाम धारणीमन्त्र (तोह॰ 636)

4. आर्यवज्रपाण्यष्टोत्तरशतक नाम धारणी मन्त्रसहित (तोह० 638)
5. आर्यसमन्तभद्राष्टोत्तरशतक नाम धारणी मन्त्रसहित (तोह० 637)
6. आर्यमञ्जुश्रीकुमारभूताष्टोत्तरशतक नाम धारणी मन्त्रसहित (तोह० 639)
7. आर्यसर्वनिवरणनिष्कम्भिनिनामाष्टोत्तरशतक धारणीमन्त्रसहित (तोह० 640)
8. आर्यक्षितिगर्भाष्टोत्तरशतक नाम धारणी मन्त्रसहित (तोह० 641)
9. आर्यमञ्जुश्रीनामाष्टशतक (तोह० 642)
10. आर्यमैत्रेयप्रतिज्ञा नामधारणी (तोह० 643)
11. hPhags pa rGyal bahi Bla Mahi gZuṅs (तोह० 652)
12. आर्यअष्टमण्डलकनाममहायानसूत्र (तोह० 644)
13. अमृतमलनाम धारणी (तोह० 645)
14. Yi Dvags Kha Nas Me hBar Ba la sKyabs mDzad Pa Zes Bya Baḥi gZuṅs (तोह० 646)
15. Yi Dvags Mo Kha ḥaBr Ma dBugs dByuṅ baḥi gTor Maḥi Cho ga (तोह० 647)
16. Ye Śes sKar mDaḥi sÑiṅ Po. (तोह० 649)
17. प्रज्ञावर्द्धिनीनाम धारणी (तोह० 650)

8. **शुद्धावासिकदेव कुल** (gNas gTsaṅ Lha)

1. महासमाजसूत्रनाम महासूत्र (तोह० 653)
2. आर्य धर्म सागरनाम धारणी (तोह० 654)
3. आर्यविघ्नविनायकनाम धारणी (तोह० 655)
4. आटानाटीय सूत्र नाम महासूत्र (तोह० 656)
5. आर्यमहामेघ (तोह० 657)
6. आर्यमहामेघवातमण्डल सर्वनागहृदयनाम महायान सूत्र (तोह० 658)
7. आर्यतपस्वीनागराजपरिपृच्छानाम धारणी (659)
8. आर्यगणपतिहृदय (तोह० 665)
9. आर्यग्रहमातृकानाम धारणी (तोह० 660)
10. आर्यवसुधरानाम धारणी (तोह० 662)
11. भगवतीवसुधराकल्प (तोह० 663)
12. श्रीमहाकालतन्त्र (तोह० 667)
13. श्रीमहाकालनाम धारणी (तोह० 668)

14. आर्यमहाकालधारणी (Rims Nad Thams Cad Las Thar bar Byed Pa) (तोह० 669)

15. श्रीदेवीकालीनामाष्टशतक (तोह० 672)

16. देवीमहाकालीनाम धारणी (तोह० 670)

17. श्रीदेवीकालीप्रशंसाराजतन्त्र (तोह० 671)

## 2. पद्म कुल (**Padmaḥi Rigs**)

पद्म कुल को निम्नलिखित पाँच उपभागों में विभाजित किया गया है—

1. प्रधान कुल Rigs kyi gTso bo
2. अधिपति कुल Rigs kyi bDag po
3. मातृ कुल Rigs kyi yum
4. क्रोध कुल Rigs kyi Khro bo
5. आज्ञाकारी कुल Rigs kyi bkaḥ gÑaṇ Pho Mo

### 1. प्रधान कुल (Rigs kyi gTso bo)

1. आर्य-अपरिमितायुर्ज्ञाननाममहायानसूत्र (तोह० 675)
2. आर्य-अपरिमितायुर्ज्ञानहृदयनाम धारणी (तोह० 676)
3. भगवदमिताभधारणीमन्त्र (तोह० 677)
4. sNañ Ba mThaḥ yas rJes śu Dran Pa (तोह० 678)
5. आर्य-अपरिमितगुणानुशंसानाम धारणी (तोह० 679)

### 2. अधिपति कुल (Rigs kyi bDag Po)

1. आर्यावलोकितेश्वरपद्मजालमूलतन्त्रराजनाम (तोह० 681)
2. आर्य-अमोघपाशहृदयनाम महायानसूत्र (तोह० 682)
3. आर्य-अमोघपाशहृदयनाम धारणो (तोह० 683)
4. आर्य अमोघपाशपारमिताषट्परिपूरकनामधारणी (तोह० 687)
5. दशभूमिधारणी (तोह० 688)
6. bPhags Pa Byaṅ chub Sems dPaḥ sPyan ras gzigs dBaṅ Phyug Phyag stoṅ Spyan Stoṅ Saṅ Ldan Pa Thogs Pa Mi mṄaḥ baḥi Thugs rJe Chen Poḥi Sems rGya cher yoṅs Su rzogs Pa zesBya baḥi gzuṅs (तोह० 691)
7. ḥPhags Pa sPyan Ras gzigs dBaṅ Phyug Gi gSaṅ Baḥi mDzod Thog Pa Med Paḥi yid bzin Gyi ḥkhor Loḥi sÑiṅ Po zes Bya Baḥi gzuṅs. (तोह० 692)

